Krishnadas Sreshthina
Grahashanti
ग्रहशांति
Sanskrit
Paper - Printed
1961 Sambat (114 years old)
64 Folio
10.5"x4.9"
Complete

श्रीगणेशाय नमः ॥ ॥ अथ ग्रहशांतिपद्धतिप्रारम्भः ॥ ॐनत्वाजीवनरामशर्म्मपितरं वागीश्वरीं श्रीगुरुं हेरंबं गिरिजापतिं गणपतिं ध्यायन्परां देवताम् ॥ मातृस्थापनपूजना भ्युदयिकः श्राद्धैर्युतांप्रस्फुटां संक्षिप्तां ग्रहशांतिपद्धतिमहं कुर्वेसतांप्रीतये ॥ अथादा वाचार्यः शुचिः सन् हस्तमात्रं चतुरंगुलोन्नतं होमानुसारावधिकं वा मध्योन्नतं समे खलं स्थंडिलं कृत्वा ततः स्थंडिलादग्निदिग्भागे कुड्यसमीपे रक्तवस्त्राच्छादितं मातृ स्थापनार्थं सुपीठं निर्माय तदुपरि पंचोर्ध्वाःपंच तिर्यक् व्रीहिभिर्यवैर्वा रेखाः कृत्वा ताभिः षोडशकोष्ठात्मकं मंडलं विधाय तेषु षोडशाक्षतपुंजान्कृत्वा तत्सँल्लग्नकुड्यादौ पूर्वभागे सप्तघृतधाराः नात्युच्छ्रितनीचाः कृत्वा तासामुपरि कुंकुमबिंदुभिर्विभूषयेत् ॥ ततः स्थंडिलादीशानदिग्भागे सपादहस्तपरिमितां भूमिंत्यक्त्वा शुक्लवस्त्राच्छादितं द्विहस्तपरिमितं ग्रहपीठं निर्माय तदुपरि तंडुलैर्नवकोष्ठात्मकं मंडलं विधाय तेषु ॥

वृत्तमंडलमादित्ये चतुरस्रंनिशाकरे ॥ मही पुत्रेत्रिकोणंस्याद्बुधेवैबाणसन्निभम् ॥ गुरौ च पट्टिशाकारं पंचकोणं तु भार्गवे ॥ धनुराकृति मन्दे च शूर्पाकारं तु राहवे ॥ केतवे तु ध्वजाकारं मंडलानि क्रमेणतु ॥ इति कुंकुमेन मंडलानि सँल्लिख्य तेषु च मुष्टिमात्राऽभग्नश्वेततंडुलैर्नवपुंजान् कृत्वा तन्मध्येतद्बाह्यतश्च वक्ष्यमाणक्रमेण यथा स्थानमधिदेवादिस्थापनाथ पुंजान् कुर्यात् ॥ ततः स्नातः कृताह्निकः क्रोधलोभा दिवर्जितः सुवासाःसपत्नीको यजमानः प्राङ्मुख[२] उदङ्मुखो वा उपविश्य कृताच मनः कृतांजलिश्च सन्स्वेष्टदेवगुरुगणपतिनमस्कारपूर्वकं संकल्पं कुर्यात् ॥ तद्यथा सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ॥ लम्बोदरश्च विकटो विघ्ननाशो विनाय कः ॥ १ ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि



१ अष्टमुष्टिभवेत्किंचित्किंचिदष्टौ च पुष्कलमिति । २ दिनेप्राङ्मुखः रात्रौ उदङ्मुखः शिवकार्येसर्वदैवोदङ्मुखः ।

यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशांतये ॥ ४ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिंदीवरश्यामो हृदयस्थो जनार्दनः ॥ ५ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहृते तस्मै गणाधिपतये नमः ॥ ६ ॥ सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यंबके गौरि नारायणि नमोस्तु ते ॥ ७ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् ॥ येषां हृदिस्थो भगवान् मंगलायतनं हरिः ॥ ८ ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चंद्रबलं तदेव ॥ विद्याबलं दैवबलं तदेव लक्ष्मीपते तेंघ्रियुगं स्मरामि ॥ ९ ॥ यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्द्धरः ॥ तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ १० ॥ सर्वेष्वारंभकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवा दिशंतु नः

सिद्धिं ब्रह्मेशानजनार्दनाः ॥ ११ ॥ वक्रतुंडमहाकायसूर्यकोटिसमप्रभ ॥ अविघ्नं कुरु मेदेवसर्वकार्येषुसिद्धिदः ॥ १२ ॥ श्रीमन्महागणाधिपतयेनमः श्रीलक्ष्मीनारायणाभ्यांनमः उमामहेश्वराभ्यांनमः शचीपुरंदराभ्यांनमः मातापितृभ्यांनमः ॐतत्सद्द्येत्यादि देशकालौ संकीर्त्यामुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरेऽमुककर्मप्रारम्भनिमित्तं सूर्यादिनवग्रहाणामीश्वराद्यधिदेवतानामग्न्यादिप्रत्यधिदेवतानां गणेशादिपंचलोकपालानामिन्द्रादिदशदिक्पालानां प्रीतये अभीप्सितकामनासिद्ध्यर्थं सकलदुरितोपशांतये मातृस्थापनपूर्वकं नवग्रहमखकर्माहं करिष्ये ततः आशुः शिशानइत्यनुवाक्येन आनोभद्राइत्यनुवाक्येनवाशांतिपाठंकुर्यात् ॥ ॐआशुः शिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् । संक्रंदनोनिमिषऽएकवीरः शतꣳसेनाऽअजयत्साकमिन्द्रः॥१॥ इत्यादि आनोभद्राः क्रतवोयंतुविश्वतोऽदब्धासोऽपरी

तासऽवुद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥१॥देवानाम्भ
द्रासुमंतिर्ऋजूयतान्देवानाᳬरातिरभिनोनिवर्ततताम्॥ देवानाᳬसक्ख्यमुपसेदिमाव्वयं
देवानऽआयुःप्प्रातिरन्तु जीवसे॥२॥ तान्पूर्व्वयानिविदाहूमवेयहम्भगम्मित्रमदितिन्दक्ष
मस्त्रिधम् ॥ अर्य्यमणंव्वरुणᳬसोममश्विनासरस्वतीनः सुभगामयस्करत् ॥३॥तन्नः॥
तन्नोव्वातोमयोभुवातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणः सोमसुतोमयो
भुवस्तदश्विनाशृणुतंधिष्ण्यायुवम् ॥४॥ तमीशानम् ॥ तमीशानञ्जगतस्तस्थुषस्प
तिन्धियञ्जिन्वमवसेहूमहेव्वयम्॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये
॥५॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टने
मिः स्वस्तिनोबृहस्प्पतिर्दधातु॥६॥पृषदश्वामरुतः पृश्निमातरः शुभंय्यावानोविदथेषु
जग्मयः॥अग्निजिह्वामनवः सूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥७॥ भद्रंकर्णेभिः

शृणुयामदेवाभद्रम्पश्श्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम
हितंय्यदायुः ॥८॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोय
त्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्गन्तोः ॥९॥ अथपूजनक्रमः ॥ आचम्यप्राणाना
यम्यप्राङ्मुखोपविश्य अक्षतकुशान् गृहीत्वा ॐ तत्सदद्य मासपक्षाद्युल्लिख्य अमुक
गोत्रोऽमुकशर्मावर्मागुप्तोवाहं अमुककर्मप्रारंभनिमित्तं गणपतिदुर्गाश्रीसहितगौर्यादि
षोडशमातृः पूजयिष्ये इतिवाक्यंकृत्वादक्षिणकरानामिकयास्पृशेदक्षतपुंजान् ॥ ॐग
णपतिरसि गायसि पद्मासि शच्यसि मेधासि सावित्र्यसि विजयासि जयासि देवसेनासि
स्वधासि स्वाहासि मातासि लोकमातासि धृतिरसि
पुष्टिरसितुष्टिरसि आत्मकुलदेवतासि श्रीरसि ॥ ततो

| स्वधा ९ | माता ११ | लो. मा. १२ | स्वाहा १० |
|---|---|---|---|
| देव ८ | कुल १६ | पद्मा २ | सावि ५ |
| जया ७ | धृति १३ गणेश | गौरी १ | विजया ६ |
| तुष्टि १५ | मेधा ४ | शची ३ | पुष्टि १४ |

१ देवाभिमुखः ।

क्षतमादाय मध्यवायौ-गजवक्त्रगणाध्यक्ष सर्वविघ्नविनाशन ॥ लंबोदरत्रिनेत्राढ्यआग
च्छगणनायक ॥१॥ ॐ गणानांत्वागणपतिꣳहवामहे प्रियाणांत्वाप्रियपतिꣳहवामहे॥
निधीनांत्वानिधिपतिꣳहवामहे वसोममआहमजानिगर्भधमात्वमजासिगर्भधम् ॥१॥
ॐभूर्भुवःस्वः गणपते इहागच्छेह तिष्ठ ॥ मध्येनैर्ऋत्ये-हिमाद्रितनयांदेवीं वरदां
भैरवप्रियाम् ॥ लंबोदरस्यजननीं गौरीमावाहयाम्यहम्॥१॥आयंगौः पृश्निरक्रमीदस
दन्मातरंपुरः ॥ पितरंचप्रयंत्स्वः ॥१॥ ॐभूर्भुवः स्वः गौरीहागच्छेहतिष्ठमध्येआग्नेयां
सुवर्णाढ्यांपद्महस्तांविष्णोर्वक्षस्थलेस्थिताम् ॥ त्रैलोक्यपूजितांदेवींपद्मामावाहयाम्य
हम्॥२॥ ॐहिरण्यरूपाऽउषसोवीरोकऽउभाविंद्रउदिथः सूर्यश्च ॥ आरोहतंवरुणमित्र
गर्त्तंततश्चक्षाथमादितिंदितिंचमित्रोसिवरुणोसि ॥ २ ॥ ॐभूर्भुवःस्वःपद्मे इहागच्छेह
तिष्ठ ॥ बाह्यपश्चिमप्रथमे-उत्पलाक्षींसुवदनांशशिकुंडलधारिणीम् ॥ देवराजप्रियांभद्रां

शचीमावाहयाम्यहम् ॥ ३ ॥ ओं कदाचनस्तरीररसीनेन्द्रसश्चासिदासुखे ॥ उपो पेन्नुमघवन्भूयऽइन्नुतेदानंदेवस्यपृच्यते ॥ ३ ॥ ॐ भूर्भुवःस्वः शचीहागच्छेहतिष्ठ ॥ बाह्यपश्चिमद्वितीये—वैवस्वतप्रफुल्लाभाममलेंदीवरस्थिताम् ॥ बुद्धिप्रसादिनींसौम्यां मेधामावाहयाम्यहम् ॥४॥ मेधांमेवरुणोददातुमेधामाग्निःप्रजापतिः ॥ मेधामिन्द्रश्चवा युश्चमेधांधाताददातुमेस्वाहा ॥ ४ ॥ ॐभूर्भुवः स्वः मेधेइहागच्छेहतिष्ठ ॥ दक्षिणबाह्य प्रथमे—जगत्स्रष्ट्रींजगद्धात्रींपत्नीरूपेणसंस्थिताम् ॥ ॐकाराक्षींभगवतींसावित्रीमाह्व याम्यहम्॥५॥ ओंतत्सवितुर्वरेण्यं भर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥५॥ ॐभूर्भुवःस्वः सावित्रि इहागच्छेहतिष्ठ ॥ दक्षिणबाह्यद्वितीये—दैत्यक्षयकरींदेवींदेवानां चाभयप्रदाम्॥ गीर्वाणवंदितांदेवीं विजयामाह्वयाम्यहम् ॥६॥ ओंविज्यंधनुः कपर्दिनो व्विशल्योबाणवाँउत ॥ अनेशन्नस्ययाऽइषवऽआभुरस्यनिषंगथिः ॥ ६ ॥ ॐभूर्भुवः

स्वः विजयेइहागच्छेहतिष्ठ ॥ बाह्योत्तरमूर्ध्नि विष्णुरुद्रार्कशक्रादिगीर्वाणेषुव्यवस्थि
ताम् ॥ त्रैलोक्यवंदितांदेवींजयामावाहयाम्यहम् ॥ ७॥ ॐयातेरुद्रशिवातनूरघोरापाप
काशिनी ॥ तयानस्तन्वाशंतमयागिरिशंताभिचाकशीहि ॥ ७ ॥ ओंभूर्भुवः स्वः जये
इहागच्छेहतिष्ठ॥उत्तरेऽधः कोष्ठबाह्ये-मयूरवाहनारूढांशक्तिखड्गधनुर्द्धराम्॥ आवाह
येद्देवसेनां तारकासुरमर्दिनीम् ॥८॥ ओंदेवानांभद्रासुमतिर्ऋजूयतांदेवानाᳬरातिरभि
नोनिवर्तताम् ॥ देवानाᳬसख्यमुपसेदिमावयन्देवानआयुः प्रतिरंतुजीवसे॥ ८॥ ओंभू
र्भुवःस्वःदेवसेनेइहागच्छेहतिष्ठ ॥ बाह्येईशानकोणे—कव्यमादायसततंपितृभ्योयाप्रय
च्छतिपितृलोकार्चितांदेवींस्वधामावाहयाम्यहम् ॥९॥ ॐपितृभ्यः स्वधायिभ्यः स्वधा
नमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यःस्वधायिभ्यः स्वधानमः
अक्षन्नपितरोमीमदंतपितरोतीतृपंतपितरः पितरः शुन्धध्वम् ॥ ९ ॥ ओंभूर्भुवः स्वः

स्वधेइहागच्छेहतिष्ठ ॥ ब्राह्मेग्निकोणे—हविर्गृहीत्वासततंदेवेभ्योयाप्रयच्छति ॥ वह्निप्रियातुसास्वाहासमागच्छतुमेध्वरे ॥ १० ॥ ओंस्वाहायज्ञंमनसः स्वाहेरोरंतीरिक्षात्स्वाहा ॥ द्यावापृथिवीभ्याᳬस्वाहाव्वातादारभेस्वाहा ॥१०॥ ॐभूर्भुवः स्वः स्वाहेइहागच्छेहतिष्ठ ॥ पूर्वस्यांप्रथमकोष्ठे—भूतग्राममिमंकृत्स्नं मयाप्रीत्यादितंपुरा ॥ त्रैलोक्यपूजितां देवीं मातरं चाह्वयाम्यहम् ॥ ११ ॥ ओंआपोऽअस्मान्मातरः शुंधयंतु घृतेननोघृतप्वः पुनंतु ॥ विश्वᳬहिरिप्रम्प्रवहंतिदेवीरुदिदाभ्यः शुचिरापूतऽएमिदीक्षातपसोस्तनूरसितान्त्वाशिवाᳬसग्मामपरिदधे भद्रंवर्णपुष्यन्न् ॥ ११ ॥ ओंभूर्भुवः स्वः मातरिहागच्छेहतिष्ठ ॥ पूर्वस्यांद्वितीये—आवाहयेल्लोकमातृजगत्पालनसंस्थिता ॥ शक्राद्यैर्वंदितादेवी स्तोत्रपाठाभिचारकैः ॥ १२ ॥ स्वाहायज्ञंवरुणः सुक्षत्रोभेषजंकरत् ॥ अतिछंदाऽइन्द्रियं बृहद्दृषभोगैर्नव्ययोदधुः ॥ १२ ॥ ओंभूर्भुवः स्व लोकमातरिहाग

च्छेहतिष्ठ॥ मध्येवायुकोणे—मनस्तुष्टिकरीं देवीं लोकानुग्रहकारिणीम्॥ सर्वकामसमृद्ध्यर्थंधृतिमावाहयाम्यहम् ॥ १३ ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरंतरमृतंप्रजासु ॥ यस्मान्नऽऋतेकिंचनकर्मक्रियतेतन्मेमनः शिवसंकल्पमस्तु ॥ १३ ॥ ॐभूर्भुवः स्वः धृते इहागच्छेहतिष्ठ ॥ बाह्येनैर्ऋत्यकोणे—प्रणतानांहिलोकेस्मिन्पुत्रपुष्टिसुखप्रदाम्॥ भक्तेभ्यश्चापिवरदांपुष्टिमावाहयाम्यहम् ॥ १४॥ ॐरयिश्चमेरायश्चमेपुष्टंचमेपुष्टिश्चमे विभुचमे प्रभुचमे ॥ पूर्णंचमे पूर्णतरंचमे कुयवंचमेक्षितंचमेन्नंचमे क्षुच्चमे यज्ञेनकल्पन्ताम् ॥ १४ ॥ ॐ भूर्भुवःस्वः पुष्टेइहागच्छेहतिष्ठ ॥ बाह्येवायव्यकोणे आवाहयामितां तुष्टिं सर्वलोकसुखप्रदाम् ॥ संतोषभावनां देवींरक्षणीयेध्वरेमम ॥ ॥ १५ ॥ त्वष्टातुरीयोऽअद्भुतऽइन्द्राग्नीपुष्टिवर्द्धना ॥ द्विपदाच्छंदऽइन्द्रियमुक्षागौनवयोदधुः ॥१५ ॥ ओंभूर्भुवःस्वः तुष्टेइहागच्छेहतिष्ठ ॥ मध्येईशानकोणे—त्वमात्मादेहितांदे

विसर्वकामफलप्रदा ॥ वंशरक्षणकर्त्रींचआगच्छागच्छमेध्वरे ॥ १६ ॥ प्राणायस्वा
हाऽपानायस्वाहा व्यानायस्वाहा चक्षुषेस्वाहा श्रोत्रायस्वाहा वाचेस्वाहा मनसे स्वाहा॥
ओंभूर्भुवःस्वः आत्मकुलदेवते इहागच्छेहतिष्ठ ॥ १६ ॥ ओंअस्मेवोऽअस्त्विन्द्रियम
स्मेनृम्णमुतक्रतुरस्मेवर्च्चाᳬंसिसंतुवः ॥ नमोमात्रे पृथिव्य नमो मात्रे पृथिव्याइ
यन्तेराड्यंतासि यमानोध्रुवोसिवरुणः कृष्येत्वाक्षेमायत्वारय्यैत्वापोषायत्वा ॥ १ ॥
इतिषोडशमातृप्रार्थना ॥ एवम्प्रत्येकमावाहनस्थापनेकुर्यात् ॥ ततःसप्तघृतधारासु
प्रथमतआरभ्य ॥ ओंशच्यैनमः शचीमावाहयामिस्थापयामि ॥ १ ॥ ओंलक्ष्म्यैनमः
लक्ष्मीमावाहयामिस्थापयामि ॥ २ ॥ ॐधृत्यैनमः धृतिमावाह० ॥ ३ ॥ ॐमेधायै
नमः मेधामावाह० ॥ ४ ॥ ॐप्रज्ञायैनमः प्रज्ञामावा० ॥ ५ ॥ ओंपुष्ट्यैनमः पुष्टि





---

१ श्रीयैनमः ।

मावाहयामि० ॥ ६ ॥ ओंसरस्वत्यैनमः सरस्वतीमावा० ॥ ७ ॥ ततस्तासां प्रतिष्ठां
कुयात् ॥ ॐतदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तम् ॥ अशीमहिगा
धमुतप्रतिष्ठान्नमोदिवबृहतेसादनाय ॥ १ ॥ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञ
मिमंतनोत्वरिष्टंयज्ञꣳसमिमंदधातु ॥ विश्वेदेवासऽइहमादयंतामो ३ प्रतिष्ठ ॥ २ ॥
मनोजूतिर्जुषतामाज्यस्येतिमनसावाइदꣳसर्वमाप्तन्तन्मनसैवैतत्सर्वमाप्नोतिबृहस्पति
र्यज्ञमिमंतनोत्वरिष्टंयज्ञꣳसमिमन्दधात्वितियद्विबृडन्तत्सन्दधातिविश्वेदेवासऽइहमा
दयन्तामितिसर्वंवैविश्वेदेवाः ॥ सर्वेणैवैतत्संदधातिसयदिकामयेतद्ब्रूयात्प्रतिष्ठेति ॥
॥ ३ ॥ एषवैप्रतिष्ठानामयज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेवप्रतिष्ठितंभवति ॥ ४ ॥ गौ
र्यादिषोडशमातरः गणेशःवसोर्द्धारासहिताः सुप्रतिष्ठिता वरदा भवंतु ॥ इत्यक्षते
नावकीर्य एकदैवप्रतिष्ठांकुर्यात् ॥ ततःपाद्यादि गृहीत्वा प्रथम आरभ्य ॥ गणपत

येनमः एतानिपाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ॐ गणपतयेनमः इदमनुलेपनं ॐ गणपतयेनमः इमानिपुष्पाणि ॐ गणपतयेनमः एतानिधूपदीपनैवेद्याचमनीयतांबूलपूगीफलदक्षिणानमस्काराणि ॐगणपतये नमः० ॥ ॐगौर्यै नमः० ॥ ॐपद्मायैनमः० ॥ ॐशच्यैनमः० ॥ ॐमेधायैनमः०॥ ॐसावित्र्यैनमः० ॥ ॐविजयायैनमः० ॥ ॐजयायैनमः० ॥ ॐदेवसेनायैनमः० ॥ ॐस्वधायैनमः० ॥ ॐस्वाहायैनमः० ॥ ॐमातृभ्योनमः० ॥ ॐलोकामातृभ्योनमः० ॥ ॐ धृत्यैनमः०॥ ॐपुष्ट्यैनमः० ॥ ॐतुष्ट्यैनमः० ॥ ॐआत्मकुलदेवतायै० ॥ ॐश्रियैनमः० ॥ इतिपाद्यादिभिःप्रत्येकमर्चयेत् ॥ गुडपक्वान्नादिनैवेद्यं दद्यात् ॥ फलमर्घ्यदक्षिणामुखवासं च स्थापितदेवताभ्यःपरिकल्पयामि ॥ ततः श्रीफलं देवताभिमुखं कृत्वा रूपंदेहि जयंदेहि भाग्यंभवतिदेहिमे ॥ पुत्रान्देहिपशून्देहिसर्वान्कामांश्चदेहिमे ॥ १ ॥ पत्रं

पुष्पं फलं तोयं रत्नानि विविधानि च ॥ गृहाणार्घ्यं मया दत्तं देहिमे वांच्छितंफलम्
॥२॥ फलेनफलितंसर्वं त्रैलोक्यं सचराचरम् ॥ फलस्यार्घप्रदानेन पूर्णाःसन्तुमनोरथाः
॥ ३ ॥ गौर्य्यादिषोडशमातॄणां वसोर्द्धारागणपतिकुलदेवीभिः सहितानां श्रीफलेन
एषवोर्घः इतिसंप्राथ्र्य स्वाभिमुखंश्रीफलंकृत्वा समर्पयेत् ॥ ॐतत्पुरुषाय विद्महे
वक्रतुंडाय धीमहि ॥ तन्नो दंतीप्रचोदयात् ॥ ॐसुभगायै विद्महे काममाल्यायैधी
हि । तन्नोगौरीप्रचोदयात् ॥ २ ॥ इति गणपतिगौरीगायत्र्यौ यथाशक्त्या जपेत् ॥
ततोयजमानस्य तिलकंकृत्वा आशीर्वादान्पठेत् ॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्व
स्तिनः पूषाविश्ववेदाः ॥ स्वतिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ १ ॥
अनेन तिलकंकृत्वा अक्षतान्गृहीत्वापठेत् ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पव
मानंमहीयते ॥ धान्यंधनं पशुंपुत्रलाभंशतसंवत्सरं दीर्घमायुः ॥ १ ॥ शतमानंभवतु

शतायुर्वैपुरुषः ॥ शतेन्द्रियायुआयुरेवैंद्रियंवीर्यमात्मंधत्ते ॥ २ ॥ शतंजीवशरदो वर्द्धमानः शतंहेमताञ्छतमुवसंतान् ॥ शतमिंद्राग्नीसविताबृहस्पतिः शतायुषाहविषे मंपुनर्दुः ॥ ३ ॥ शतमिन्नुशरदोऽअंतिदेवा यत्रानश्चक्राजरसं तनूनाम् ॥ पुत्रासोयत्र पितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः ॥ ४ ॥ मंत्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ॥ शत्रूणांबुद्धिनाशोस्तु मित्राणामुदयस्तव ॥ एभिर्मंत्रैर्मंत्राक्षतान् गृहीत्वा प्रार्थयेत् ॥ अद्यपूर्वोच्चरित एवंग्रहगुणविशिष्टायां पुण्यतिथौ मातृकास्थापनपूजन कृतस्य विधेर्यन्न्यूनमतिरिक्तंतत्सर्वं भवतांब्राह्मणानां वचनात् श्रीगणेशांबिकयोः प्रसादाद्विधिवद्भवतु ॥ उत्तरेकर्मणिनिर्विघ्नमस्तु ॥ १ ॥ अथनान्दीश्राद्धसौकर्य्याय संकल्पविधिनोच्यते ॥ आचनं प्राणायामंचकृत्वा दधिकुंकुमयवाक्षतदूर्वाजलान्ये कीकृत्यसंकल्पंकुर्यात् ॥ सत्यवसुसंज्ञका विश्वेदेवा नांदीमुखाःॐभूर्भुवः स्वः इदंवः

पाद्यंस्वाहानामयंचवृद्धिः ॥ सर्वंपितृकार्यमपिसव्येनैवस्वाहाकारसंयुक्तंयवैरेवदैववत्कुर्यात् ॥ अमुकगोत्रा मातृपितामहीप्रपितामह्यः नांदीमुख्यः ॐभूर्भुवः स्वः इदं वः पाद्यंस्वाहानामयं च वृद्धिः ॥ अमुकगोत्राः पितृपितामहप्रपितामहाः नांदीमुखाः ॐभूर्भुवः स्वः पाद्यंस्वाहाऽनामयंचवृद्धिः ॥ अमुकगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः पत्नीसहिताःनांदीमुखाः ॐभूर्भुवःस्वःइदंवः पाद्यं स्वाहानामयंचवृद्धिः श्रीगणेशांबिकाः इदंवः पाद्यमाचमनम् ॥ स्वतिनऽइन्द्रेतिदिग्बंधनंकुर्यात् ॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वतिनः पूषा विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ १ ॥ इत्यनेनाक्षतैर्दिग्बंधनंकुर्यात् ॥ आभ्युदयिकश्राद्धोपहाराणां पवित्रतास्तुदेशकालपाकपात्रोपहारद्रव्यश्रद्धासंपदस्तु ॥ अद्येत्यादिप्रयोगः ॥ अमुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरेऽमुककर्मप्रारंभनिमित्तं संकल्पविधिनाभ्युदयिक

श्राद्धमहंकरिष्य॥सत्यवसुसंज्ञकानांविश्वेषांदेवानांनांदीमुखानां ॐभूर्भुवःस्वः इदंवःआ
सनगंधाद्युपचारकल्पनंस्वाहानामयंचवृद्धिः अमुकगोत्राणांमातृपितामहीप्रपितामही
नांनादीमुखीनां ॐभूर्भुवः स्वः इदंवः आसनगंधाद्युपचारकल्पनं स्वाहाऽनामयंचवृ
द्धिः अमुकगोत्राणांपितृपितामहप्रपितामहानांनांदीमुखानां ॐभूर्भुवः स्वः इदंवः आस
नगंधाद्युपचारकल्पनंस्वाहाऽनामयंच वृद्धिः ॥ अमुकगोत्राणांमातामहप्रमातामहवृद्ध
प्रमातामहानां पत्नीसहितानां नांदीमुखानां ॐभूर्भुवः स्वः इदं वः आसनगंधाद्युप
चारकल्पनंस्वाहानामयंचवृद्धिः॥गणेशांबिकयोरासनमिदमर्चितंवोज्योतिः सूर्योज्यो
तिः पुष्पं अस्याभ्युदयिकश्राद्धस्यार्चनविधेःपरिपूर्णतास्तु ॥ आचमनं सत्यवसुसं
ज्ञकेभ्यो विश्वेभ्योदेवेभ्यः इदंवः यथायथाविभागं ब्राह्मणभोजनं वः स्वाहावृद्धिः ॥
अमुकगोत्राभ्यः मातृपितामहीप्रपितामहीभ्यः नांदीमुखीभ्यः ॐभूर्भुवः स्वः इदंवः

यथायथाविभागं ब्राह्मणभोजनंस्वाहावृद्धिः ॥ अमुकगोत्रेभ्यः पितृपितामहप्रपिता
महेभ्यः नांदीमुखेभ्यः ॐभूर्भुवः स्वः इदंवः यथायथाविभागंब्राह्मणभोजनंस्वाहावृ
द्धिः ॥ अमुकगोत्रेभ्यः मातामहप्रमातामहवृद्धप्रमातामहेभ्यः पत्नीसहितेभ्योनांदी
मुखेभ्यः ॐभूर्भुवः स्वः इदंवः यथायथाविभागंब्राह्मणभोजनंस्वाहावृद्धिः ॥ गणेशांबि
काभ्यांब्राह्मणभोजनंस्वाहावृद्धिः ॥ अस्याभ्युदयिकश्राद्धस्यसांगतासिद्ध्यर्थंसत्यव
सुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्यो ॐभूर्भुवः स्वः इदं वः द्राक्षामलकनिष्क्रय
णीदक्षिणामुखवासः प्रीयतांवः स्वाहावृद्धिः ॥ अमुकगोत्रेभ्योमातृपितामहीप्रपितो
महीभ्योनांदीमुखीभ्यः ॐभूर्भुवः स्वः इदंवः द्राक्षामलकनिष्क्रयणीदक्षिणामु
खवासः प्रीयतांवः स्वाहावृद्धिः ॥ अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः
नांदीमुखेभ्यः ॐभूर्भुवः स्वः इदंवः द्राक्षामलकनिष्क्रयणीदक्षिणामुखवासः प्रीयतां

वःस्वाहावृद्धिः ॥ अमुकगोत्रेभ्यः मातामहप्रमातामहवृद्धप्रमातामहेभ्यः पत्नीस
हितेभ्योनांदीमुखेभ्यः ॐभूर्भुवः स्वः इदंवः द्राक्षामलकनिष्क्रयणीदक्षिणामुखवासः
प्रीयंतांस्वाहावृद्धिः ॥ विश्वेदेवाः प्रीयंतामितिब्रूयात् ॥ तेदेवाः शांतिदास्तुष्टिदाः
पुष्टिदावरदाः भवंतु ॥ अद्यपूर्वोच्चरितएवंगुणविशिष्टायां पुण्यतिथौकृतैतदाभ्युदयिक
श्राद्धविधेर्यन्न्यूनमतिरिक्तंतत्सर्वंभवतांब्राह्मणानांवचनात् श्रीगणेशांबिकयोःप्रसादाद्धि
धिवद्भवतु ॥ ततः ॐउपास्मैगायतानरः ॥ पवमानायेंदवे ॥ अभिदेवांइयक्षते ॥१॥ मा
तापितामहीचैवतथैवप्रपितामही॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ मातामहस्तत्पि
ताचप्रमातामहकादयः॥ एतेभवंतुसुप्रीताः प्रयच्छन्तुचमंगलम्॥१॥अनेन कर्मणानां
दीमुखदेवताःप्रीयंतांवृद्धिः ॥ इतिसंकल्पविधिनानांदीश्राद्धंपरिपूर्णम् ॥ १ ॥ ततोबहिः
शालमागत्यग्रहयज्ञप्रारंभनिमित्तं-दधिदूर्वांकुशाग्रैश्चकुसुमाक्षतकुंकुमैः॥सिद्धार्थोदक

पूगैश्च अष्टांगो अर्घउच्यते॥ इत्यष्टांगमर्घंसंपाद्यवरणंकुर्यात् ॥ प्राङ्मुख[1]ः सपत्नीकोयजमानः स्थित्वाउदङ्मुखा[2]नांऋत्विजांवरणंकुर्यात् ॥ सुमुहूर्तंसुलग्नंक्षेमंकल्याणंआरोग्यं शुभंभवतु॥ ततः शांतिसूक्तंपठेत्॥ ॐ आशुःशिशानोव्वृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् ॥ संक्रन्दनोनिमिषऽएकवीरःशतꣳसेनाऽअजयत्साकमिन्द्रः ॥ १ ॥ संक्रन्दनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना॥ तदिन्द्रेणजयततत्सहद्ध्वंय्युधोनरऽइषुहस्तेनव्वृष्णा॥ २॥ सऽइषुहस्तैः सनिषंगिभिर्व्वशीसꣳस्स्रष्टासयुधऽइन्द्रोगणेन ॥ सꣳसृष्टजित्त्सोमपाबाहु शर्द्ध्यूग्ग्रधन्न्वाप्प्रतिहिताभिरस्ता॥ ३॥ बृहस्प्पतेपरिदीयारथेनरक्षोहामित्राँ२ऽअपबाधमानः ॥ प्प्रभञ्जन्त्सेनाःप्प्रमृणोयुधाजयन्नस्म्माकमेद्ध्यविताराथानाम्॥ ४॥ बलविज्ञायस्थविरःप्प्रवारःसहस्वान्वाजीसहमानऽउग्ग्रः ॥ अभि

---

१ देवाभिमुखः । २ यजमानदक्षिणांगस्थानां ।

वीरोऽअभिसत्त्वासहोजाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥५॥ गोत्रभिदंगोविदंवज्ज्रबाहुञ्ज
यन्तमज्ज्मप्प्रमृणन्तमोजसा ॥ इमर्ठ॑सजाताअनुवीरयध्वमिन्द्रर्ठ॑सषायोऽअनुसर्ठ॑र
भध्वम् ॥६॥ अभिगोत्राणिसहसागाहमानोदयोवीरः शतमन्युरिन्द्रः ॥ दुश्च्च्यवनःपृत
नाषाडयुद्ध्योस्माकर्ठ॑सेनाऽअवतुप्प्रयुत्त्सु ॥७॥ इंद्रऽआसान्नेताबृहस्प्पतिर्द्दक्षिणायज्ञः
पुरऽएतुसोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयंतीनाम्मरुतोयन्त्वग्ग्रम् ॥८॥ इन्द्रस्यव्वृ
ष्णोव्वरुणस्स्यराज्ञऽआदित्यानाम्मरुतार्ठ॑शर्द्ध्वऽउग्ग्रम् ॥ महामनसाम्भुवनच्च्यवा
नाङ्घोषोदेवानाञ्जयतामुदस्थात् ॥९॥ उद्धर्षयमघवन्नायुधान्युत्त्सत्त्वनाम्मामकाना
म्मनार्ठ॑सि ॥ उद्व्वृत्रहंन्वाजिनांव्वाजिनान्न्युद्रथानाञ्जयतांय्यन्तुघोषाः ॥ १० ॥ अ
स्म्माकमिन्द्रःसमृतेषुध्वजेष्ष्वस्माकंजाऽइषवस्ताजयन्तु ॥ अस्म्माकंवीराऽउत्तरेभव
न्त्वस्स्मार्ठ॑उदेवाऽअवताहवेषु ॥ ११ ॥ अमीषाञ्चित्तम्प्रतिलोभयन्तीगृहाणाङ्गांन्य

प्वेपरेहि ॥ अभिप्प्रेहिनिर्द्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ॥ १२ ॥ अव
सृष्टापरापतशरव्व्येब्ब्रह्मसर्ठशिते॥गच्छामित्रान्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः १३
प्रेताजयतानरऽइन्द्रोवःशर्म्मयच्छतु॥उग्ग्रावः सन्तुबाहवो नाधृष्ष्यायथासथ॥१४॥
असौयासेनामरुतःपरेषामब्भ्यैतिनऽओजसास्प्पर्द्धमाना ॥ तङ्गूहततमसापव्व्रतेनय
थामीऽअन्योऽअंन्ययन्नजानन् ॥ १५॥ यत्रबाणाः सम्पतन्तिकुमाराव्विशिखाऽइव॥ तन्न
ऽइन्द्रोबृहस्प्पतिरदितिः शर्म्मयच्छतुव्विश्वाहाशर्म्मयच्छतु ॥ १६ ॥ मर्माणितेवर्म्मणा
च्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम्॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदे
वामदन्तु ॥ १७ ॥ ॐगणानान्त्वागणपतिर्ठहवामहे प्रियाणान्त्वाप्प्रियपतिर्ठहवांमहे
निधीनान्त्वानिधपतिर्ठहवामहेव्वसोमम ॥ आहमजानिगब्भर्धमात्त्वमजासिगब्भ
धम् ॥ १ ॥ ततः आचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॐविष्णुः ३ श्रीमद्भगवतो

महापुरुषस्य विष्णोराज्ञयाप्रवर्त्तमानस्यअद्यश्रीब्रह्मणोद्वितीयेपरार्द्धे श्रीश्वेतवाराह कल्पे जंबुद्वीपेभरतखंडेआर्य्यावर्त्तांतर्गतब्रह्मावर्त्तैकदेशेअर्बुदारण्येकुमारिकानाम्निक्षेत्रे श्रीमहानद्योः गंगायमुनयोः पश्चिमेतटे श्रीसूर्यसंनिधौ अमुकवर्ष अमुकायने अमुकऋतौ अमुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरेऽमुककर्मप्रारंभानिमित्तं मनो भीष्टकामनासिद्ध्यर्थंसर्वविघ्ननिवारणार्थंलाभक्षेमविजयारोग्यसंपत्प्राप्तिकामः ग्रहयज्ञ कर्मग्रहयज्ञांगभूतंब्रह्माचार्यर्त्विजांवरणंचाहं करिष्ये ॥ अर्घंगृहीत्वाप्रार्थयेत्–स्वागतं भोद्विजश्रेष्ठामदनुग्रहकारकाः ॥ इदमर्घ्यमिदंपाद्यंभवाद्भिः प्रतिगृह्यताम् ॥१॥ अर्घोर्घो र्घः प्रतिगृह्यतां प्रतिगृह्णामीतिप्रतिवचनम् चरणप्रक्षालनंकृत्वा– यत्फलंकपिलादाने कार्त्तिक्यांज्येष्ठपुष्करे ॥ तत्फलंपांडवश्रेष्ठविप्राणांपादशौचने ॥ १ ॥ विप्रपादतले घृष्टः क्षिप्यमाणस्तुयः करः ॥ सकरः करविज्ञेयः शेषाहिमकराकराः ॥ २ ॥ पृथिव्यांया

नितीर्थानितानितीर्थानिसागरे ॥ सागरे सर्वतीर्थानिविप्रस्यदक्षिणेपदे ॥ ३ ॥ तिलक मंत्रः ॥ नमोस्त्वनंतायसहस्रमूर्त्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्नेपुरुषाय शाश्वतेसहस्रकोटियुगधारिणेनमः ॥ १ ॥ अर्चनंब्रह्मणेप्रीयतां यदाबध्नमितिब्राह्मणह स्तेकंकणंबध्नीयात् ॥ ॐयदाबध्नन्दाक्षायणाहिरण्यर्ठंशतानीकायसुमनस्यमानाः ॥ तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्य्यथासम् ॥ १ ॥ अमुकगोत्रममुकप्र वरममुकवेदस्यामुकशाखाध्यायिनममुकशर्म्माणं ब्राह्मणं अस्मिन्ग्रहयज्ञकर्मणिए भिर्द्रव्यैः ब्रह्मत्वेनत्वामहंवृणे ॥ वृतोस्मि इतिप्रतिवचनम् ॥ ततः ॐवृतेनदीक्षामाप्नोति दीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ १ ॥ इतिपठेत् ॥ यथाचतुर्मुखोब्रह्मासर्वलोकपितामहः ॥ तथात्वंममयज्ञेस्मिन् ब्रह्माभवद्विजोत्तम ॥ १ ॥ इतिसंप्रार्थ्य ॥ ततःआचार्यंऋत्विजः पूर्वप्रकारेणवृणुयात् ॥ तत्रआचार्यप्रार्थना—आचा

योंहियथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्आचार्योभवभोद्विज ॥ १ ॥
इतिआचार्यप्रार्थना ॥ ततोयथसंभवं मधुपर्काद्यैः कुंडलमुद्रिकावासोभिश्चाचार्या-
दीन्पूजयेत्॥स्वपादौप्रक्षाल्याचम्य वरणश्राद्धंकुर्यात्॥ आचार्यप्रमुखेभ्योब्राह्मणेभ्यः
एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं एषवोर्घः इदमत्रचंदनंचपुष्पं स्वस्तिनइंद्रेति
दिग्बंधः ॐस्वस्तिनऽइन्द्रोव्वृद्धश्रवाः स्वतिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअ
रिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ वरणश्राद्धोपहाराणांपवित्रतास्तु ॥ देशका
लपाकपात्रद्रव्यश्रद्धासंपदस्तु ॥ ॐतत्सदद्येत्यादि मासे पक्षे तिथौ वासरेवरणश्राद्धम
हंकरिष्ये ॥ वृतेभ्योब्राह्मणेभ्यः इदमासनं वृतेभ्योब्राह्मणेभ्यः इदमर्घ्यंवृतेभ्योब्राह्मणे
भ्यः इदमर्चनं यथादत्तंगंधाद्यर्चनं कुंडलमुद्रिकावासांसियज्ञोपवीतंतत्प्रत्याम्नायद्रव्यं
वावृतेभ्योब्राह्मणेभ्यः अहंसंप्रददे ॥ इदमर्चितंवोज्योतिः सूर्योज्योतिर्दीपकंज्योतिः पु

ष्पम् ॥ अस्यवरणश्राद्धविधेर्यन्न्यूनमतिरिक्तंतत्सर्वंभवतांब्राह्मणानांवचनात् विधिवद्भ
वतु ॥ ततःसुजातेतियजमानहस्ते रक्षिकांबध्नीयात् ॥ ओंसुजातोज्ज्योतिषासहशर्म्म
वरूथमासदस्वः ॥ वासोऽअग्नेविश्वरूपꣳसँव्व्ययस्वविभावसो ॥१॥ दधिक्राव्णोतिद
धिवंदनं ॐदधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयु
ꣳषितारिषत् ॥१॥ कांडात्कांडादितिदूर्वामार्जनम् ॥ ॐकाण्डात्काण्डात्प्ररोहन्तीपरु
षः परुषस्प्परि एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥१॥ याःफलिनीतिफलग्रहणं ॐयाःफ
लिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः॥ बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः॥१॥
हिरण्यगर्भेतिमुद्रार्पणम् ॥ ॐहिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकआसीत्॥
सदाधारपृथिवींद्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ १ ॥ ततोभिषेकः ॥ ॐशां
तिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु आयुष्यमस्तु आरोग्यमस्तु बहुपुत्रंबहुधनंचा

स्तु यत्पापंरोगमशुभमकल्याणंतद्दूरेप्रतिहतमस्तु द्विपदचतुष्पदेभ्यः सुशांतिरस्तु ॥
अथपुण्याहवाचनम् ॥ तत्रकर्ताचम्यसुमुखश्चैकदंतश्चेत्यादिपठित्वा श्रुत्वावादेशकालौ
संकीर्त्यामुककर्मांगतयापुण्याहवाचनं करिष्ये ॥ तदंगतयागणपतिपूजनंचकरिष्ये ॥
इतिसंकल्प्य गणेशंपूजयेत्॥तद्यथा हेहेरंबत्वमेह्येहिअंबिकात्र्यंबकात्मज ॥सिद्धिबुद्धि
पतेत्र्यक्षसर्वलोकपितः पितः ॥ १ ॥ नागास्यनागहारत्वंगणनाथचतुर्भुजः ॥ भूषितः
स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥ २ ॥ आवाहयामिपूजार्थंरक्षार्थंचममक्रतोः॥
इहागत्यगृहाणत्वंपूजांरक्षचमेक्रतुम् ॥ ३ ॥ इत्यावाह्यषोडशोपचारैः संपूज्य॥ पात्रेस
फलमर्घ्यमादाय रक्षरक्षगणाध्यक्षत्र्यक्षत्रैलोक्यरक्षक ॥ भक्तानामभयंकर्त्तात्राताभव
भवार्णवात् ॥ १ ॥ द्वैमातुरकृपासिंधोदैवषाण्मातुराग्रज ॥ वरदस्त्वंवरंदेहिवांच्छितं
वांच्छितार्थद ॥ २ ॥ अनेनफलदानेनफलदोभवमेप्रभो ॥ इत्यर्घ्यंदत्वानत्वाप्रार्थ

येत् ॥ वक्रतुंडमहाकायसूर्यकोटिसमप्रभ ॥ अविघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ १ ॥
विघ्नेश्वरायवरदायसुरप्रियाय लंबोदरायसकलायजगद्धिताय ॥ नागाननायसितसर्प
विभूषिताय गौरीसुतायगणनाथनमोनमस्ते ॥ २ ॥ भक्तार्तिनाशनपराय गणेश्वराय
सर्वेश्वरायशुभदायसुरेश्वराय ॥ विद्याधरायविकटायचवामनायभक्तिप्रपन्नवरदाय
नमोनमस्ते ॥३॥ नमस्तेब्रह्मरूपायविष्णुरूपायतेनमः ॥ नमस्तेरुद्ररूपायकरिरूपाय
तेनमः ॥४॥ इतिप्रार्थना ॥ अथकलशस्थापनम् ॥ भूरसीतिभूमिप्रार्थना॥ॐभूरसिभूमि
रस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींय्यच्छपृथिवीन्दृꣳहपृथि
वीम्माहिꣳसीः ॥ १ ॥ महीद्यौरितिधान्याधारंकृत्वा ॥ ॐमहीद्यौः पृथिवीचनऽ
इमंय्यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ १ ॥ आजिघ्रमितिकलशस्थापनम्
ॐआजिघ्रकलशंमह्यात्वाविशंत्विन्दवः ॥ पुनरूर्जानिवर्त्तस्वसानः सहस्रंधुक्ष्वोरुधारा

य.शा.
॥१५॥

पयस्वतीःपुनर्म्मांविशताद्द्रयिः ॥१॥ वरुणोस्योत्तमित्यपः पूर्य्य ॐवरुणस्योत्तंभनमसि
०वरुणस्यस्कंभसर्जनीस्त्थोवरुणस्यऋतसदन्यासिवरुणस्यऋतसदनमसिवरुणस्यऋत
सदनमासीद ॥ १ ॥ याऽओषधिरितिसर्वौषधीप्रक्षेपः ॥ ॐयाऽओषधीः पूर्वाजातादेवे
भ्यस्त्रियुगंपुरा ॥ मनैनुबभ्भ्रूणामहर्ठंशतंधामानिसप्तच ॥१ ॥ अश्वत्थेवेतिपंचपल्लवः
॥ ॐअश्वत्थेवो निषदनम्पर्णेवोवसतिष्कृता ॥ गोभाजऽइत्किलासथयंत्सनवथ
पूरुषम् ॥ १ ॥ याः फलिनीतिफलम् ॥ ॐ याः फलिनीर्य्याऽअफलाऽअपुष्पायाश्चपु
ष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुञ्चत्वर्ठंहसः ॥ १४ ॥ हिरण्यगर्भेति मुद्रार्पणम् ॥
ॐहिरण्यगर्भः समवर्त्तताग्ग्रेभूतस्यजातः पतिरेकआसीत् ॥ सदाधारपृथिवींद्या
मुतेमाङ्कस्म्मैदेवायहविषाविधेम ॥ १५ ॥ पूर्णादर्वीत्युपरिष्टात्पूर्णपात्रम् ॥ ॐ
पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्ज्जर्ठंशतक्रतो ॥ ११ ॥

पद्ध.

॥१५॥

याः फलिनीतिश्रीफलम्॥ ॐयाःफलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः॥ बृहस्प तिप्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥ १४ ॥ सुजातो ज्योतिषेतिवस्त्रवेष्टनम् ॥ ॐसुजातो ज्ज्योतिषासहशर्मवरूथमासदत्स्वः ॥ व्वासोऽअग्ने व्विश्वरूपꣳसंव्व्ययस्वव्विभावसो ॥१७॥ततःपाशहस्तंचवरुणमंभसांपतिमीश्वरम्॥आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्य ताम् ॥ १ ॥ ॐभूर्भुवः स्वः वरुणइहागच्छेहतिष्ठेतितत्रवरुणमावाह्य षोडशोचारैः संपूज्यप्रार्थयेत् ॥ कलशस्यमुखेविष्णुर्ग्रीवायांचमहेश्वरः ॥ मूलेचैवस्थितो ब्रह्मा मध्येमातृगणाः स्मृताः ॥ १ ॥ कुक्षौतुसागराः सप्त सप्तद्वीपावसुंधरा ॥ ऋग्वेदोथय जुर्वेदः सामवेदोप्यथर्वणः ॥ २ ॥ अंगैश्चसहिताः सर्वेकलशंतुसमाश्रिताः ॥ गायत्री चैवसावित्रीशान्तिः पुष्टिस्तथैवच ॥ ३ ॥ सर्वेसमुद्राः सरितस्तीर्थानिजलदानदाः ॥ आयांतुममशांत्यर्थंदुरितक्षयकारकाः ॥ ४ ॥ मातृदेवोभव पितृदेवोभव आचार्यदेवो

भव अतिथिदेवोभव आशिषः प्रार्थयंते एताःसत्याआशिषः संतु ॥ ततः अवनिकृत जानुमंडलः कमलमुकुलसदृशमंजलिंशिरस्याधायदक्षिणेनपाणिनासुवर्णपूर्णकलशं धारयित्वा।दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिचतेनायुःप्रमाणेनपुण्याहंदीर्घमायु रस्तु॥अपांमध्येस्थिता देवाःसर्वमप्सुप्रकीर्तितं॥ ब्राह्मणानांकरेन्यस्ताः शिवाआपोभवं तुताः ॥१॥ शिवाआपःसंतु॥लक्ष्मीर्वसतिपुष्पेषुलक्ष्मीर्वसतिपुष्करे ॥सामेवसतुवैनित्यं सौमनस्यंतथास्तुनः॥१॥ सौमनस्यमस्तु ॥ अक्षतंचास्तुमेपुण्यंदीर्घमायुर्यशोबलम्॥ यद्यच्छ्रेयस्करंलोकेतत्तदस्तुसदामम ॥१॥अक्षतंचारिष्टंचास्तु॥ब्राह्मणानांहस्तेअक्षता दिदत्वा ॥ गंधाः पांतु मांगल्यंचास्तु॥ पुष्पाणिपांतु सौश्रियमस्तु॥ अक्षताः पांतु आ युष्यमस्तु ॥ तांबूलानिपांतु ऐश्वर्यमस्तु ॥ दाक्षिणाः पांतु आरोग्यमस्तु ॥ दीर्घमायुः श्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु॥श्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचारोग्यंचायुष्यंचास्तु ॥

यत्कृत्वासर्ववेदयज्ञक्रियाकारणकर्म्मारंभाः शुभाःशोभनाः प्रवर्तंते तमहमोंकारमादिं
कृत्वाऋग्यजुःसामाथर्वाशीर्वचनंब्रह्मर्षिमतंसमनुज्ञातंभवद्भिरनुज्ञातः पुण्यंपुण्याहंवाच
यिष्ये ॥ वाच्यताम् ॥ ऋक् ॥ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत् ॥
द्रविणोदावीरवतीमिषन्नोद्रविणोदारासतेदीर्घमायुः ॥ १ ॥ यजुः ॥ द्रविणोदापिपी
षतिजुहोतप्रचतिष्ठत ॥ नेष्ट्राद्दतुभिरिष्यत ॥ २ ॥ ऋक् ॥ सवितापश्चातात्सवितापु
रस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदी
र्घमायुः ॥ १ ॥ यजुः ॥ सवितात्वासवाना सुवतामग्निर्गृहपतीना सोमोवनस्पतीना
म् ॥ बृहस्पतिर्वाचइंद्रोज्येष्ठचायरुद्रः पशुभ्योमित्रःसत्योवरुणोधर्मपतीनाम् ॥ २ ॥
ऋक् ॥ ॐनवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रम् ॥ भागंदेवेभ्योविदधात्या
यन्प्रचंद्रमास्तिरतेदीर्घमायुः ॥ १ ॥ यजुः ॥ ॐनतद्रक्षा सिनपिशाचास्तरंतिदेवाना

मोजः प्रथमज ँ ह्येतत् ॥ योबिभर्तिंदाक्षायण ँ हिरण्य ँ सदेवेषुकृणुतेदीर्घमायुः समनु
ष्येषुकृणुतेदीर्घमायुः ॥ ३ ॥ ऋक् ॥ ॐउच्चादिविदक्षिणावंतोअस्थुर्येअश्वदाःसह
तेसूर्येण ॥ हिरण्यदाअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुः ॥ १ ॥ यजुः ॥ उच्चा
तेजातमंधसोदिविसद्भूम्याददे ॥ उग्र ँ शर्म्ममहिश्रवः ॥ २ ॥ इत्येताऋचः पुण्याहे
ब्रूयात् ॥ व्रतनियमतपःस्वाध्यायक्रतुदयादमदानविशिष्टानांसर्वेषांब्राह्मणानांमनः
समाधीयतांसमाहितमनसः स्मः॥ प्रसीदंतुभवंतः प्रसन्नाः स्मः ॥ अथपूर्वस्थापितकल
शात्ताम्रपात्रेजलमादाय यजमानमूर्धनिदूर्वयासेचनंकुर्यात् ॥ शांतिरस्तुपुष्टिरस्तु तु
ष्टिरस्तु वृद्धिरस्तु ऋद्धिरस्तु अविघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु शिवमस्तु शि
वंकर्म्मास्तु कर्मसमृद्धिरस्तु धर्मसमृद्धिरस्तु वेदसमाद्धिरस्तु शास्त्रसमृद्धिरस्तु पुत्र
पौत्रसमृद्धिरस्तु धनधान्यसमृद्धिरस्तुइष्टसंपदस्तुअरिष्टनिरसनमस्तु ॥ भूमौ ॥ यत्पा

पंरोगमशुभमकल्याणंतद्दूरेप्रतिहतमस्तु ॥ पात्रे ॥ यद्यच्छ्रेयस्तत्तदस्तु उत्तरेकर्मणि निर्विघ्नमस्तु उत्तरोत्तरमहरहरभिवृद्धिरस्तु उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंतां तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंतां तिथिकरणेसमुहूर्तें सनक्षत्रे सग्रहेसलग्नेसदैवतेप्रीयेतां दुर्गापांचाल्यौप्रीयेताम् अग्निपुरोगाविश्वेदेवाः प्रीयंताम् इन्द्रपुरोगामरुद्गणाः प्रीयंताम् वसिष्ठपुरोगाऋषिगणाः प्रीयंतां माहेश्वरीपुरोगाउमा मातरः प्रीयंताम् अरुन्धतीपुरोगाएकपत्न्यः प्रीयंताम् विष्णुपुरोगाः सर्वेदेवाः प्रीयंतां ब्रह्मपुरोगाः सर्वे वेदाः प्रीयंतां आदित्यपुरोगाः सर्वेग्रहाः प्रीयंतां ब्रह्मचब्राह्मणाश्चप्रीयंताम् अंबिकासरस्वत्यौप्रीयेताम् श्रद्धामेधेप्रीयेताम् भगवतीकात्यायनीप्रीयताम् भगवतीमाहेश्वरीप्रीयताम् भगवतीऋद्धिकरीप्रीयताम् भगवतीवृद्धिकरीप्रीयताम् भगवतीसिद्धिकरीप्रीयताम् भगवतीपुष्टिकरीप्रीयताम् भगवतीतुष्टिकरीप्री

यताम् भगवंतौविघ्नविनायकौप्रीयेताम् सर्वाः कुलदेवताः प्रीयंताम् सर्वा ग्रामदेव
ताः प्रीयंताम् सर्वाइष्टदेवताः प्रीयंताम् ॥ भूमौ ॥ हताश्चब्रह्मद्विषः हताश्चपरिपंथिनः
हताश्चविघ्नकर्तारः शत्रवः पराभवंयांतु शाम्यतुं घोराणिशाम्यंतुपापानिशाम्यंत्वीतयः
॥ पात्रे ॥ शुभानिवर्द्धंतां शिवाआपः संतु शिवाऋतवः संतुशिवाअग्नयः संतु शिवा आहु
तयः संतु शिवाओषधयः संतु शिवावनस्पतयः संतु शिवाअतिथयःसंतु अहोरात्रेशि
वेस्याताम् ॥ ऋक् ॥ ॐ शंनः कनिक्रदद्देवःपर्जन्योअभिवर्षतु ॥ शंनोद्यावापृथिवीशंप्र
जाभ्यः शंनएधिद्विपदेशंचतुष्पदे ॥ १ ॥ यजुः ॥ ॐ निकामेनिकामेनः पर्जन्योवर्षतु
फलवत्योनओषधयः पच्यंतांयोगक्षेमोनः कल्पताम् ॥ २ ॥ पूर्णपात्रे जलंक्षिपे
त् ॥ शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाः सर्वेग्रहाः
प्रीयंताम् ॥ भगवान्नारायणः प्रीयताम् ॥ भगवान्स्वामीमहासेनः प्रीयताम् ॥ पुरोनुवा

क्ययायत्पुण्यंतदस्तु याज्ययायत्पुण्यं तदस्तु वषट्कारेणयत्पुण्यंतदस्तु प्रातःसूर्यो
दयेयत्पुण्यंतदस्तु एतत्कल्याणयुक्तंपुण्यमस्तु पुण्याहंवाचयिष्ये वाच्यताम् ॥ ब्राह्मं
पुण्यमहर्यच्चसृष्ट्युत्पादनकारकम् ॥ वेदवृक्षोद्भवंनित्यंतएवाहंब्रुवंतुनः ॥ १ ॥ भो
ब्राह्मणाः ममसकुटुंबस्यसपरिवारस्यगृहेपुण्याहंभवंतोब्रुवंतु ३ ॐपुण्याहं ३ ॥ ऋक्
॥ ॐ उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजीशिशुमती
रपीत्यासर्वतोनः शकुनेभद्रमावदविश्वतोनः शकुनेपुण्यमावद ॥ यजुः ॥ ॐ पुनं
तुमादेवजनाः पुनंतुमनसाधियः ॥ पुनंतुविश्वाभूतानिजातवेदः पुनीहिमा ॥ २ ॥ पृथि
व्यन्मुद्धृतायांतुयत्कल्याणंपुराकृतम् ॥ ऋषिभिः सिद्धगंधर्वैस्तकल्याणंब्रुवंतुनः॥ १ ॥
भोब्राह्मणाः ममसकुटुंबस्य सपरिवारस्यगृहे कल्याणंभवंतोब्रुवंतु ३ ॐ कल्या
णं ३ ॥ ऋक् ॥ ॐ अपाः सोममस्त्वमिन्द्रप्रयाहिकल्याणीर्जायासुरणंगृहेते ॥ य

त्रारथस्यबृहतोनिधानंविमोचनंवाजिनोदक्षिणावत् ॥ १ ॥ यजुः ॥ ॐयथेमांवाचं
कल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्या शूद्रायचार्य्यायचस्वायचारणायच ॥
प्रियोदेवानांदक्षिणायैदातुरिहभूयासमयंमे कामःसमृद्धयताम् ॥ २ ॥ सागरस्य
तुयाऋद्धिर्महालक्ष्म्यादिभिः कृता ॥ संपूर्णासुप्रभावाचतांताम्रृद्धिंब्रुवंतुनः ॥ २ ॥
भोब्राह्मणाःममसकुटुंबस्यसपरिवारस्यगृहे ऋद्धिंभवंतोब्रुवंतु ३ ॥ ॐऋद्धयताम् ३ ॥
ऋक् ॥ ॐ ऋद्धयामस्तोमंसनुयामवाजमानोमंत्रंसरथेहोपयातम् ॥ यशोनपक्कंम
धुगोष्वंतराभूतांशोअश्विनोःकाममप्राः १ ॥ यजुः ॥ ॐ सत्रस्यऋद्धिरस्यगन्मज्यो
तिरमृताअभूम ॥ दिवंपृथिव्याअद्धयारुहामाविदामदेवाँस्वज्योंतिः ॥ ३ ॥ स्वस्तिस्तुया
ऽविनाशाख्यापुण्यकल्याणवृद्धिदा ॥ विनायकप्रियानित्यंतांतांस्वस्तिंब्रुवंतुनः ॥ १ ॥
भोब्राह्मणाःममसकुटुंबस्यसपरिवारस्यगृहे स्वस्तिंभवंतोब्रुवंतु ३ ॐस्वस्ति ३ ॥ ऋक् ॥

ॐ स्वस्तिऋद्धिप्रपथेश्रेष्ठारेक्णस्वत्याभियावाममेति ॥ सानोअमासोअरणेनिपात स्वावेशाभवतुदेवगोपा ॥ १ ॥ यजुः ॥ ॐ स्वस्तिऽनइंद्रोवृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ २ ॥ मृकंडसूनो रायुर्यद्वद्ध्रुवलोमशयोस्तथा ॥ आयुषातेनसंयुक्ताजीवेमशरदःशतम् ॥ १ ॥ शतंजीवं तुभवंतः ॥ ऋक् ॥ ॐ शतंजीवशरदोवर्द्धमानःशतंहेमंताञ्छतमुवसंतान् ॥ शतमिं द्राग्नीसवितावृहस्पतिःशतायुषाहविमेषंपुनर्दुः ॥ १ ॥ यजुः ॥ ॐ शतमिन्नुशरदोअं तिदेवाऽयत्रानश्चक्राजरसंतनूनां ॥ पुत्रासोऽयत्रपितरो भवंतिमानोमध्यारीरिषतायुर्ग तोः ॥ २ ॥ शिवगौरीविवाहेयायाश्रीरामेनृपात्मजे ॥ धनदस्यगृहेयाश्रीरस्माकंसास्तु सद्मनि ॥१॥ ॐ अस्तुश्रीः ३॥ ऋक् ॥ ॐ श्रियेजातःश्रियआनिरियायश्रियंवयोजरि तृभ्योदधाति ॥ श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥१॥ यजुः ॥

अ.शां. ॥२०॥

ॐमनसः काममाकूतिंवाचःसत्यमशीय ॥ पशूनाꣳरूपमन्नस्यरसोय्यशः श्रीः श्रयतां मयिस्वाहा ॥ २ ॥ प्रजापतिर्लोकपालो धाताब्रह्मासदेवराट् ॥ भगवान्शाश्वतोनित्यं सनोरक्षतुसर्वतः ॥ १ ॥ भगवान्प्रजापतिःप्रीयताम् ॥ ऋक् ॥ ॐ प्रजापतेनत्वदेता न्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्ते जुहुमस्तन्नोऽअस्तुवयंस्यामपतयो रयीणाम् ॥ १ ॥ यजुः ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ य त्कामास्तेजुहुमस्तन्नोअस्त्वयममुष्यपितासावस्यपितावयꣳस्याम पतयोरयीणाꣳ स्वाहा ॥ २ ॥ आयुष्मतेस्वस्तिमते यजमानायदाशुषे ॥ कृताःसर्वाशिषःसंतुऋत्वि ग्भिर्वेदपारगैः ॥ १ ॥ देवेन्द्रस्ययथास्वस्तितथास्वस्तिगुरोर्गृहे ॥ एकलिंगेयथास्वस्ति तथास्वस्तिसदामम ॥२०॥ ॐ आयुष्मतेस्वस्ति ३ ॥ ऋक् ॥ ॐ स्वस्तयेवायुमुपब्रवा महैसोमंस्वस्तिभुवनस्ययस्पतिः ॥ बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवं

पद्ध. ॥२०॥

तुनः ॥ १ ॥ यजुः ॥ॐ प्रतिपन्थामपद्महिस्वस्तिगामनेहसम् ॥ य्येनविश्वाःपरिद्विषो वृणक्तिविन्दतेवसु ॥ २ ॥ विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नआसुव ॥ ऋक् ॥ॐमहोअग्नेःसमिधानस्यशर्मण्यनागामित्रेवरुणेस्वस्तये ॥ श्रेष्ठेस्यामसवितुःस विमनितद्देवानामवोअद्यावृणीमहे ॥१॥ इमम्मेवरुणश्रुधी हवमद्याचमृडय॥त्वामवस्यु राचके ॥ २ ॥ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव रुणेहबोध्युरुशंसमानआयुः प्रमोषीः॥ ३ ॥ व्वरुणस्योत्तंभनमसिव्वरुणस्यस्कंभ सर्ज्जनीस्थोव्वरुणस्यऽऋतसदन्यसिवरुणस्यऋतसदनमसिवरुणस्यऋतसदनमासीद ॥ ४ ॥ इतिवरुणदैवत्यान् आशीर्मंत्रान्पठित्वा ॥ ॐ मंत्रार्थाः सफलाः संतु पूर्णाः संतुमनोरथाः॥ शत्रूणांबुद्धिनाशोस्तुमित्राणामुदयस्तव ॥१ ॥ ऋग्वेदोथयजुर्वेदः साम वेदोप्यथर्वणः॥ब्रह्मवत्केस्थितानित्यंनिघ्नंतुतवशात्रवान् ॥ यंकामंकामयतेसोस्मैकामः

समृध्ध्यते॥इतिमंत्राक्षतान्यजमानहस्तेदद्यात्॥ततोयजमानःआचार्यादीन्प्रार्थयेत् ॥
अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया॥ सुप्रसादंप्रकर्त्तव्यंशांतिकंविधिपूर्वकमिति
ततआचार्यःस्थंडिलेपंचभूसंस्कारान्त्रिस्त्रिःकुर्यात् ॥ तत्रप्रथमंगौरसर्षपविकिरणम् ॥
ततः कुशत्रयेणहस्तमितांपरितश्चतुरस्त्रांभूमिंपरिसमूह्य २ तान्कुशानैशान्यांपरित्यजे
त् ॥ ततोगोमयोदकेनोपलिप्य २ स्रुवमूलेनकुशेनवाप्रागग्रंप्रादेशमात्रोत्तरोत्तरंत्रिरुल्लि
ख्योल्लेखनक्रमेणानामिकांगुष्ठाभ्यांमृदमुधृत्य ऐशान्यामुत्क्षिप्यवारिणातद्देशमभिषि
च्यशुद्धकांस्यपात्रेणाग्निमादाय तत्रप्रत्यङ्मुखंनिदध्यात्स्वाभिमुखंनिदद्ध्यादित्यर्थः
तदनंतरंग्रहस्थापनंकुर्यात् ॥ तत्रसौकर्यायकुशकंडिकापूर्वंचरुश्रपणमादौक्रियतेदोषा
भावात्॥तद्यथा-प्रथमंब्रह्मवरणंॐअद्यकर्तव्यग्रहशांतिहोमकर्मणिकृताकृतावेक्षणरूप
ब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिः पुष्पचंदनतांबूलवासोभिर्ब्रह्मत्वेनत्वा

महंवृणे वृतोस्मीतिप्रतिवचनं ॐयथाविहितंकर्मकुर्विंतिहोत्राभिहिते ॐकरवाणीतिप्रति
वचनानंतरंअग्नेर्दक्षिणतःहस्तमितांभूमिंविहायतत्रशुद्धमासनंदत्वातदुपरिप्रागग्रांकुशा
नास्तीर्यास्मिन्ग्रहशांतिहोमकर्मणित्वंमेब्रह्माभवेत्यभिधायकल्पितासनेउपवेशयेत् ॐ
भवामीतितेनोक्तेअग्निंप्रदक्षिणीकारयित्वातत्रोपवेश्य प्रणीतापात्रंमृन्मयंपुरतःकृत्वा
जलेनापूर्य्यकुशैराच्छाद्यब्रह्मणोमुखमवलोक्याग्नेरुत्तरतः आस्तरणभूमिमतिक्रम्यकु
शोपरिनिदध्यात्ततःपरिस्तरणंतत्रपूर्वाग्राः परिस्तरणकुशाःकार्याःबर्हिषश्चतुर्थभागमा
दायाग्नेय्यादीशानांतंब्रह्मणोग्निपर्यंतंनैर्ऋत्याद्वायव्यांतंअग्नितः प्रणीतापर्यंतंततोग्नेरुत्त
रतःपश्चिमदिशिपवित्रच्छेदनार्थंकुशत्रयंपवित्रकरणार्थंसाग्रमनंतर्गर्भिकुशपत्रद्वयंप्रोक्ष
णीपात्रंआज्यस्थालीचरुस्थालीसंमार्ज्जनकुशत्रयंउपयमनार्थं वेणीरूपंकुशत्रयंप्रादेश

---

१ एकोनपंचाशद्बर्हिः । २ कुशाःपंचवा । ३ कुशाः सप्त वा ।

मितपालाशसमित्त्रयं स्रुवःस्रुक्आज्यं तंडुलाःषट्पंचाशदुत्तरजयमानमुष्टिशतद्वयाव
च्छिन्नंतंडुलपूर्णपात्रं तिलयवग्रहसमिधः एतानिपवित्रच्छेदनकुशानांपूर्वपूर्वदिशिक्रमे
णासादनीयानितदुरत्तरतअन्यदपियथाकार्यानुरूपमाचारपरिप्राप्तद्रव्यमासादनीयम्
ततःपवित्रच्छेदनकुशैःप्रादेशमात्रंसंमाप्यपवित्रेच्छित्वातानपास्य सपवित्रकरेणप्रणी
तोदकंत्रिःप्रोक्षणीपात्रेकृत्वाऽनामिकांगुष्ठाभ्यांउत्तराग्रेपवित्रेगृहीत्वात्रिरुत्पवनम् ॥ततः
प्रोक्षणीपात्रस्यसव्यहस्तकरणंअनामिकांगुष्ठाभ्यांपवित्रेगृहीत्वात्रिरुद्दिंगनंप्रणीतोदके
नप्रोक्षणीप्रोक्षणंततः प्रोक्षणीजलेनयथासादितद्रव्यंसेचनं तद्यथाआज्यस्थालीप्रोक्षणं
चरुस्थालीप्रोक्षणं संमार्ज्जनकुशप्रोक्षणंउपयमनकुशप्रोक्षणं समिधःप्रोक्षणं स्रुवप्रोक्षणं
स्रुक्प्रोक्षणंआज्यप्रोक्षणंतंडुलप्रोक्षणंपूर्णपात्रप्रोक्षणं तिलप्रोक्षणं यवप्रोक्षणंग्रहसमिधः
प्रोक्षणंएवमन्यदपियथासादितद्रव्यंप्रोक्ष्य अग्निप्रणीतयोर्मध्येप्रोक्षणीपात्रनिधानंसप

वित्रम् ततःआज्यस्थाल्यामाज्यनिर्वापःचरुस्थाल्यांतंडुलनिर्वापः तंडुलांस्त्रिःप्रक्षाल्य
प्रणीतोदकमासिच्य तत्रकिंचिज्जलांतरंदत्वा ततःस्वयंचरुंगृहीत्वाब्रह्मणाचाज्यंवह्नेरु
त्तरतश्चरुंदक्षिणतःआज्यंनिदध्यात्॥अथग्रहस्थापनं ॥ तत्रग्रहपीठेगत्वा-सुवर्णपटकेले
ख्यागंधैर्मंडलकेगृह्य॥ अथवाक्षतपुंजेषुशक्त्याविच्तानुसारतः॥ १॥इत्याद्युक्तप्रकारेणस
पुंजंनवकोष्ठात्मकंमंडलंविधायसूर्यादीन्स्थापयेत्॥तत्रादौयज्ञरक्षाविधानं तद्यथा गणा
धिपंनमस्कृत्यनमस्कृत्यपितामहं॥विष्णुंरुद्रंश्रियंदेवींवंदेभक्त्यासरस्वतीं ॥१॥ स्थाना
धिपंनमस्कृत्यग्रहनाथंनिशाकरं॥धरणीगर्भसंभूतंशशिपुत्रंबृहस्पतिं ॥२॥ दैत्याचार्यंन
मस्कृत्यसूर्यपुत्रंमहाग्रहं॥ राहुकेतूनमस्कृत्ययज्ञारंभेविशेषतः॥३॥शक्राद्यादेवताःसर्वा
न्मुनींश्चैवकथयाम्यहम् ॥ गर्गंमुनिंनमस्कृत्यनारदंमुनिपुंगवं ॥ ४ ॥ वसिष्ठंमुनिशार्दूलं
विश्वामित्रंतथैवच ॥ व्यासंमुनिंनमस्कृत्यसर्वशास्त्रविशारदं ॥ ५ ॥ विद्याधरान्मुनीन्यो

गानाचार्यांश्चतपोधनान् ॥ तान्सर्वान्प्रणिपत्यादौयज्ञरक्षांकरोम्यहम् ॥ ६ ॥ पूर्वेरक्ष
तुगोविंदआग्नेय्यांगरुडध्वजः ॥ याम्यांरक्षतुवाराहोनारसिंहस्तुनैर्ऋते ॥ ७ ॥ वारुण्यां
केशवोरक्षेद्वायव्यांमधुसूदनः ॥ उत्तरेश्रीधरोरक्षेदीशानेतुजनार्दनः ॥ ८ ॥ शंखोरक्षेच्च
यज्ञाग्रेपृष्ठेखड्गस्तथैवच ॥ वामपार्श्वेगदारक्षेद्दक्षिणेतुसुदर्शनः ॥ ९ ॥ ब्रह्माणंमघवारक्षे
दाचार्यंपातुवामनः ॥ रक्षाहीनंतुयत्स्थानंतत्सर्वंपातुवामनः ॥ १० ॥ इतिरक्षाविधानं ॥
अथसूर्यादीनांनवग्रहाणामावाहनंपूजनंच ॥ रक्तपुष्पाक्षतैर्मध्यकोष्ठे दिवाकरंसहस्रांशुं
सुरासुरनमस्कृतम् ॥ लोकनाथंविश्वनेत्रंसूर्यमावाहयाम्यहं ॥१॥ उद्यंतंचमहातेजस्वि
नंचैवाभयप्रदं ॥ दुर्निरीक्ष्यंखगमनंसूर्यमावाहयाम्यहं ॥ २ ॥ भानोसूर्यग्रहाध्यक्षकलिं
गविषयोद्भव ॥ रक्तःकाश्यपगोत्रेयद्विभुजःपद्मलांछनः ॥ ३ ॥ सप्ताश्ववाहनागच्छ
पद्ममध्येवरप्रदः ॥ अग्निंदूतेतिमंत्रेणरुद्ररूपीप्रतिष्ठितः ॥ ४ ॥ अग्निंदूतंपुरोदधे

हव्यवाहमुपह्वये ॥ देवाः आसादयादिह ॥ १ ॥ आकृष्णेनेतिच ओंभूर्भुवःस्वः कलिंगदे
शोद्भवंकाश्यपसगोत्रमश्वारूढंक्षत्रियवर्णसूर्यमावाहयामि प्राङ्मुखंस्थापयामि ॥
॥ १ ॥ श्वेतपुष्पाक्षतैःआग्नेय्यां हिमरश्मिनिशानाथंतारकाभिःसमन्वितम्॥ औषधी
नांतुराजानमिंदुमावाहयाम्यहम् ॥ २ ॥ अहोचंद्रजगत्प्राणयमुनाविषयोद्भवः ॥
सुश्वेतात्रेयगोत्रेयगदापाणेवरप्रदः ॥ ३ ॥ दशाश्ववाहनायाहिउमारूपीसमाविश ॥
हुताशनदलेदेवोमंत्रेणाप्स्वग्निनार्चितः ॥४ ॥ अप्स्वग्नेसधिष्ठवसौस्वधीरनुरुध्यसे॥ गर्भे
संजायसेपुनः ॥ १ ॥ इमंदेवेतिच ओंभूर्भुवःस्वः यमुनातीरदेशोद्भवमात्रेयसगोत्रंवश्यै
वर्णचंद्रमावाहयामि प्रत्यङ्मुखंस्थापयामि ॥ २ ॥ रक्तपुष्पाक्षतैःयाम्यां धरणीग
र्भसंभूतंलोहितांगंसुवर्चसम् ॥ कुमारंक्रूरकर्माणंभौममावाहयाम्यहं ॥ १ ॥ निर्जितारिं
चशत्रुघ्नमग्निमाश्रित्यदेवताम्॥ ऋषिभिःस्तूयमानंचभौममावाहयाम्याहम् ॥ २ ॥ उ

ज्जयिन्यांसमुत्पन्नोभोभोभौमश्चतुर्भुज ॥ भरद्वाजकुलेजातशूलशक्तिगदाधरः ॥ ३ ॥
वरदोमेषमारूढः स्कंदप्रियतडित्प्रभः ॥ स्योनापृथिवीतिमंत्रेण दलेयाम्ये प्रति
ष्ठितः ॥ ४ ॥ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ १ ॥
अग्निर्मूर्द्धेतिच ओंभूर्भुवःस्वः अवंतिदेशोद्भवंभारद्वाजसगोत्रंवरदंमेषारूढंक्षत्रियवर्णं
भौममावाहयामि याम्यमुखंस्थापयामि ॥ पीतपुष्पाक्षतैरीशान्यां बुधंबुद्धिप्रदातारं
सोमवंशसमुद्भवम् ॥ यजमानहितार्थायबुधमावाहयाम्यहम् ॥ १ ॥ अहोचंद्रसुतश्रीम
न्मागधायांसमुद्भवः ॥ अत्रिगोत्रश्चतुर्बाहोखड्गखेटकधारकः ॥ २ ॥ गदीवरदसिं
हस्थः सुवर्णाभः समाविश ॥ कृष्णवदीशपत्रेचइदंविष्णुप्रपूजितः ॥ ३ ॥ इदंविष्णु
र्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांसुरे ॥ १ ॥ उद्बुध्येतिच ॐभूर्भुवः स्वः
मगधदेशोद्भवमत्रिसगोत्रंगदिनंवरदंसिंहस्थं वैश्यवर्णंबुधमावाहयामिउत्तराभिमुखं

स्थापयामि ॥ ४ ॥ पीतपुष्पाक्षतैःउत्तरस्याम् बृहस्पतेंगिरापुत्रोदेवानांचपुरोहितः ॥
त्रातारंसर्वदेवानांगुरुमावाहयाम्यहम् ॥ २ ॥ अहोवाचस्पतेपीतसंजातः सिंधुमंडले ॥
एह्यांगिरसगोत्रेयहयारूढश्चतुर्भुजः ॥ ३ ॥ दंडाक्षसूत्रवरदकमंडलुधरप्रभो ॥ महा
निंद्रेतिसंपूज्योविधिवदुत्तरेदले ॥ ४ ॥ महा इद्रोवज्रहस्तः षोडशीशर्मयच्छतु ॥ हंतु
पाप्मानंयोस्मान्द्वेष्टि ॥ १ ॥ बृहस्पतेइतिच ॥ ॐभूर्भुवः स्वः सिंधुदेशोद्भवमांगिरस
गोत्रंविप्रवर्णंबृहस्पतिमावाहयामि उत्तराभिमुखंस्थापयामि ॥ ५ ॥ श्वेतपुष्पाक्षतैः
पूर्वस्याम् प्रविश्यजठरेशंभोर्निसृतःपुनरेवयः ॥ तंसुरारिगुरुंभक्त्याशुक्रमावाहयाम्यहं
॥ २ ॥ भोभोभोजकटेजातः शुक्रश्वेताश्ववाहनः ॥ समागच्छचतुर्बाहोभृगुगोत्रविभू
षणः ॥ ३ ॥ परिघाक्षावलीहस्तकमंलुधरप्रभो ॥ शक्रवत्पूर्वपत्रेचशुक्रज्योतिश्चपूजितः
॥ ४ ॥ शुक्रज्योतिश्चचित्रज्योतिश्चसत्यज्योतिश्चज्योतिष्मांश्च ॥ शुक्रश्चऋतपा

श्वात्यर्ठंहाः ॥ १ ॥ अन्नात्परीतिच ॥ ॐ भूर्भुवःस्वः भोजकटदेशोद्भवंभार्गवसगो
त्रंविप्रवर्णं शुक्रमावाहयामि प्राङ्मुखंस्थापयामि ॥ ६ ॥ कृष्णपुष्पाक्षतैःपश्चिमे ॥
धर्मराजानुजंचैवभिन्नांजनसमप्रभम् ॥ छायामार्तंडसंभूतंशनिमावाहयाम्यहम् ॥ १॥
कृष्णांगंकृष्णवर्णंचकृष्णाजिनधरंतथा ॥ शूरंमंदगतिंचैवशनिमावाहयाम्यहम् ॥ २ ॥
अहोसौराष्ट्रसंजातच्छायापुत्रचतुर्भुज कृष्णवर्णार्कगोत्रेयबाणहस्तधनुर्धरः॥त्रिशूलीच
समागच्छवरदोगृध्रवाहनः ॥ प्रजापतेनेतिपूज्योविधिवत्पश्चिमेदले ॥ ४ ॥ ॐप्रजाप
तेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयर्ठंस्या
मपतयोरयीणाम् ॥ १ ॥ शन्नोदेवीतिच ॐभूर्भुवःस्वः सौराष्ट्रदेशोद्भवं काश्यपसगो
त्रंशूद्रवर्णं शनिमावाहयामि प्रत्यङ्मुखंस्थापयामि ॥ ७ ॥ धूम्रपुष्पाक्षतैःनैर्ऋत्याम
चक्रेणाच्छिन्नमूर्द्धानंविष्णुभावनिरीक्षितम् ॥ यजमानहितार्थायराहुमावाहयाम्यहम् ॥

॥२ ॥ राहोबर्वरकेदेशेसंजातःकायवर्जितः ॥ गोत्रेपैठीनसेह्येहिसिंहारूढोवरप्रदः ॥३॥
करालवदनश्रेष्ठकालरूपांजनप्रभः ॥आयंगौरितिमंत्रेणपूज्योनैर्ऋत्यपत्रके ॥ ४ ॥ ॐ
आयंगौःपृश्नीरक्रमीदसदन्मातरंपुरः ॥ पितरंचप्रयंत्स्वः ॥ १ ॥ कयानश्चित्रेतिच ॐ
भूर्भुवःस्वः बर्बरदेशोद्भवंपैठीनसगोत्रंशूद्रवर्णराहुमावाहयामि याम्यमुखंस्थापयामि ॥
॥ ८॥ धूम्रपुष्पाक्षतैर्वायव्याम् आंजनेयंमहारौद्रंबहुरूपंमहाग्रहम्॥महाकायंमहाक्रूरं
केतुमावाहयाम्यहम् ॥ १ ॥ एह्येहिभगवन्केतोव्योमचारिन्महामते ॥ ग्रहैस्तुसहितः
सर्वैःकेतुमावाहयाम्यहम् ॥ २ ॥ केतवोविविधाकारामलयाद्रिसमुद्भवाः ॥ द्विभुजा
जैमिनेगोत्रेगदाहस्तावरप्रदाः ॥ ३ ॥ आगच्छंतुकपोतस्थाःशोभनेमारुतेदले ॥ ब्रह्म
जज्ञानमंत्रेणचित्रगुप्तामिवार्चयेत् ॥ ४ ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरु
चोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ १ ॥ केतुंकृ

ण्वन्नेतिच ॥ ओंभूर्भुवःस्वःअंतर्वेदिसमुद्भवंजैमिनिसगोत्रंशूद्रवर्णंकेतुमावाहयामि याम्य
मुखंस्थापयामि ॥९॥ अथाधिदेवानामावाहनंस्थापनंच ॥ एवंग्रहान्प्रतिष्ठाप्यस्थापनी
याश्चदेवताः ॥ तेषांस्थानानिनामानिमंत्रांश्चप्रवदाम्यहम् ॥१॥ रुद्रंत्र्यंबकमंत्रेणरवेरुत्त
रतोन्यसेत् ॥यस्ययोवर्णस्तद्वर्णपुष्पाक्षतैः ओंत्र्यंबकंयजामहेसुगंधिंपुष्टिवर्द्धनं ॥उर्वारु
कमिवबंधनान्मृत्योर्मुक्षीयमामृतात्॥ ओंभूर्भुवःस्वः शंभोइहागच्छेहतिष्ठ॥ सोमस्याग्ने
यिदिग्भागेश्रीश्वेतेमेनकात्मजांओंश्रीश्वतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपम
श्विनौव्यात्तम् इष्णन्निषाणामुम्मइषाणसर्वलोकम्मइषाण ॥ ओंभूर्भुवःस्वःउमेइहागच्छे
हतिष्ठ ॥ यदक्रंदेतिभौमस्ययाम्येस्कंदंप्रपूजेयत्॥ओंयदक्रंदःप्रथमंजायमानउद्यंत्समु
द्रादुतवापुरीषात्॥श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजातंतेअर्वन्॥१॥ओंभूर्भुवः
स्वःस्कंदइहागच्छेहतिष्ठ विष्णुंविष्णोररराटेतियजेत्पूर्वेबुधस्यच।ओंविष्णोरराटमसिवि

ष्णोःस्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसिवैष्णवमसिविष्णवेत्वा॥ १ ॥ ओंभूर्भुवःस्वः
विष्णोइहागच्छेहतिष्ठ ॥ गुरोरुत्तरतोभ्यर्च्याब्रह्माब्रह्मेतिमंत्रतः ॥ ॐआब्रह्मन्ब्राह्मणो
ब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः शूरइषव्योतिव्याधीमहारथोजायतांदोग्ध्रीधेनुर्वोढा
नड्वानाशुःसप्तिः पुरंधिर्योषाजिष्णूरथेष्ठासभेयोयुवास्ययजमानस्यवीरोजायतान्निकामे
निकामेनः पर्जन्योवर्षतुफलवत्योनऽओषधयःपच्यंतांयोगक्षेमोनःकल्पताम् ॥ १ ॥
ॐभूर्भुवःस्वः ब्रह्मन्इहागच्छेहतिष्ठ ॥ सजोषेंद्रेतिशुक्रस्यशक्रंप्राच्यांनिधापयेत्॥सजो
षाइंद्रसगणोमरुद्भिःसोमंपिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँरपमृधोनुदस्वथाभयंकृणुहि
विश्वतोनः ॥ ११ ॥ ॐभूर्भुवःस्वः शक्रइहागच्छेहतिष्ठ ॥ शनेःपश्चिमतःस्थाप्योय
मायत्वेतिवैयमः ॥ ॐयमायत्वामखायत्वासूर्य्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तु
पृथिव्याः सꣳस्पृशस्पाहि अर्चिरसिशोचिरसितपोसि॥ ७ ॥ ॐभूर्भुवःस्वः यमइहाग

च्छेहतिष्ठ ॥ कार्षिरसीतिमंत्रेणराहोःकालंतथोत्तरे ॥ ॐकार्षिरसिसमुद्रस्यत्वाक्षित्याउ
न्नयामिसमापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ ८ ॥ ॐभूर्भुवःस्वः कालइहागच्छे
हतिष्ठ ॥ चित्रगुप्तंतुकेतूनांचित्रावस्वितिनैर्ऋते ॥ ॐचित्रावसोस्वस्तितेपारमसीय ॥
ॐभूर्भुवःस्वः चित्रगुप्तइहागच्छेहतिष्ठ ॥ ९ ॥ अथप्रत्यधिदेवतानामावाहनंस्थाप
नंच ॥ शंभोरग्रेयजेद्वह्निंसनःपितेतिमंत्रतः ॥ ॐसनःपितेवसूनवेग्नेसूपायनोभव ॥ सच
स्वानःस्वस्तये॥ १ ॥ॐभूर्भुवःस्वः अग्नेइहागच्छेहतिष्ठ ॥ आपोअद्येतिमंत्रेणह्यमायानै
र्ऋतेह्यपः॥ॐआपोअद्यान्वचारिषर्ठंरसेनसमसृक्ष्महि ॥ पयस्वानग्नऽआगमंतम्मासर्ठं
सृजवर्चसाप्रजयाचधनेनच ॥२॥ ॐभूर्भुवःस्वः आपइहागच्छध्वमत्रतिष्ठध्वम् ॥ धरां
स्कंदाद्वायुकोणे ॥ॐचिदसितयादेवतयांगिरस्वध्रुवासीद॥ परिचिदसितयादेवतयांगिर
स्वध्रुवासीद ॥ ३ ॥ ॐभूर्भुवःस्वःधरेइहागच्छेहतिष्ठ ॥ विष्णुंनारायणोत्तरे ॥ ॐइदं

विष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳬसुरे ॥ ४ ॥ ॐभूर्भुवःस्वर्विष्णोइहा
गच्छेहतिष्ठ॥ प्रजापत्युत्तरेचेंद्रं ॐइंद्रआसान्नेताबृहस्पतिर्दक्षणायज्ञः पुरऽएतुसोमः॥
देवसेनानामभिभंजतीनांजयंतीनाम्मरुतोयंत्वग्रम् ॥ ५ ॥ ॐभूर्भुवःस्वः इंद्रइहागच्छे
हतिष्ठ ॥ इंद्रादैंद्रींचपश्चिमे ॐइंद्रंदैवीर्विशोमरुतोनुवर्त्मानोभवन्यथेंद्रंदैवीर्विशोमरु
तोनुवर्त्मानोभवन् ॥ एवामिमᳬयजमानन्दैवीश्चविशोमानुषीश्चानुवर्त्मानोभवंतु ॥ ६ ॥
ॐभूर्भुवः स्वः इंद्राणिइहागच्छेहतिष्ठ ॥ प्रजापतिंयमात्पश्चात् ॐप्रजापतेनत्वदेता
न्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्त्वयममुष्यपितासाव
स्यपिताव्वयᳬस्यामपतयोरयीणाᳬस्वाहा ॥ रुद्रयत्तेक्रिविपरन्नामतस्मिन्हुतमस्य
मेष्टमसिस्वाहा ॥ ७ ॥ ॐभूर्भुवःस्वः प्रजापतेइहागच्छेहतिष्ठ ॥ पन्नगान्कालपश्चिमे ॐ
नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु॥येऽअंतरिक्षेयेदिवितेभ्यःसर्प्पेभ्योनमः ॥८॥ ॐभूर्भु

वः स्वः पन्नगाइहागच्छध्वमिहतिष्ठध्वम् ॥ ईशानेचित्रगुप्तस्यब्रह्माणंसंप्रपूजयेत् ॐब्रह्म
जज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोवेनआवः॥ सबुध्न्याउपमाऽअस्यविष्ठाःसतश्चयो
निमसतश्चविवः ॥ १ ॥ ॐभूर्भुवःस्वः ब्रह्मन्निहागच्छेहतिष्ठ ॥ अथगणपंचकंस्थाप
येत् शनेःकेतोश्चपूर्वेणगुरोःसूर्यस्यपश्चिमे॥लंबोदरःप्रतिष्ठाप्योगणानांत्वेतिमंत्रतः ॥१॥
ॐगणानान्त्वागणपतिर्ठंहवामहेप्प्रियाणान्त्वाप्प्रियपतिर्ठंहवामहेनिधीनान्त्वानिधिप
तिर्ठंहवामहेवसोमम ॥ आहमजानिगर्ब्भधमात्वमजासिगर्ब्भधम् ॥ १ ॥ ॐभूर्भु
वःस्वःगणपतेइहागच्छेहतिष्ठ ॥ उत्तरेचततोदुर्गांजातवेदेतिमंत्रतः ॥ ॐजातवेदसे
सुनवामसोममरातीयतोनिदहातिवेदः ॥ सनः परिषदतिदुर्गाणिविश्वानावेवसिंधुं
दुरितात्यग्निः ॥ २ ॥ ॐभूर्भुवःस्वः दुर्गेइहागच्छेहतिष्ठ ॥ वायोयेतेसहस्त्रिणोरथा
सस्तेभिरागहि ॥ नियुत्वान्त्सोमपीतये ॥ ३ ॥ ॐभूर्भुवःस्वःवायोइहागच्छे

हतिष्ठ ॥ घृतंघृतेतिमंत्रेण अंतरिक्षंतुपश्चिमे ॥ ॐघृतं घृतपावानः पिबतव्व सांवसापावानः पिबतांतरिक्षस्यहविरसिस्वाहा ॥ दिशः प्रदिशऽआदिशोविदिशऽ उद्दिशोदिग्भ्यःस्वाहा ॥ ४ ॥ ॐभूर्भुवः स्वः अंतरिक्षइहागच्छेहतिष्ठ ॥ यावां कशेतिमंत्रेणयजेत्पूर्वेततोश्विनौ ॥ ॐयावांकशामधुमत्यश्विनासूनृतावती ॥ तयाय ज्ञंमिमिक्षताम् ॥ ५ ॥ ॐभूर्भुवःस्वः अश्विनौइहागच्छतामिहतिष्ठताम् ॥ इतिपंचलोक पालनांस्थापनम् ॥ अथनक्षत्रस्थापनम् ॥ सप्तसप्तयजेद्धानांप्रागाद्यश्विनिपूर्वकम् ॥ अश्विनातेजसादस्रं ॐअश्विनातेजसाचक्षुः प्राणेनसरस्वतीवीर्य्यम् ॥ वाचेंद्रोबलेनें द्रायदधुरिंद्रियम् ॥ १ ॥ ॐभूर्भुवः स्वः दस्रइहागच्छेहतिष्ठ ॥ यमायत्वेतियाम्यम् ॐयमायत्वामखायत्वासूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याः सꣳस्पृश स्पाहि अर्चिरसिशोचिरसितपोसि ॥ २ ॥ ॐभूर्भुवः स्वः याम्यभइहागच्छेहतिष्ठ ॥

कृत्तिकाचायमग्निश्च ॐअयमग्निःसहस्रिणोवाजस्यशतिनस्पतिः ॥ मूर्द्धाकवीरयीणाम्
॥ ३ ॥ ॐभूर्भुवःस्वः कृत्तिकेइहागच्छेहतिष्ठ ॥ ब्रह्मजज्ञेतिरोहिणी ॐब्रह्मजज्ञानंप्रथमं
पुरस्ताद्विसीमतः सुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाः सतश्चयोनिमसतश्च
विवः ॥ ४ ॥ ॐभूर्भुवःस्वः रोहिणीइहागच्छेहतिष्ठ ॥ सोमोधेन्वेतिसौम्यंच ॐसोमो
धेनुꣳसोमोअर्वंतमाशुꣳसोमोवीरंकर्मण्यंददाति सादन्यंविदथ्यꣳसभेयंपितृश्रवणंयो
ददाशदस्मै ॥ ५ ॥ ॐभूर्भुवःस्वः सौम्यइहागच्छेहतिष्ठ ॥ नमस्तेरुद्ररौद्रभम्
ॐनमस्तेरुद्रमन्यवउतोतऽइषवेनमः ॥ बाहुभ्यामुततेनमः ॥ ६ ॥ ॐभूर्भुवः स्वः रौ
द्रभइहागच्छेहतिष्ठ ॥ अदितिर्द्यौरादितेयम् ॐअदितिर्द्यौरदितिरंतरिक्षमदितिर्म्मा
तासपितासपुत्रः ॥ विश्वेदेवाअदितिः पंचजनाऽअदितिर्ज्जातमदितिर्जनित्वम् ॥ ७ ॥
ॐभूर्भुवः स्वः आदितेयइहागच्छेहतिष्ठ ॥ एतानिपूर्वस्यांस्थाप्यानि ॥ पुष्यंवाचस्प

तेनतु ॥ ॐवाचस्पतयेपवस्ववृष्णोऽअठंशुभ्यांगभस्तिपूतः ॥ देवोदेवेभ्यःपवस्वयेषां भागोसि ॥ ८ ॥ ॐभूर्भुवःस्वः पुष्यइहागच्छेहतिष्ठ ॥ सर्पेभ्यःसर्पदैवतं ॐनमोस्तुस र्पेभ्योयेकेचपृथिवीमनु ॥ येअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ ९ ॥ ॐभूर्भुवः स्वः आश्लेषेइहागच्छेहतिष्ठ ॥ पितृभ्यःपितृदैवतं ॐपितृभ्यःस्वधायिभ्यःस्वधानमः पि तामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ अ क्षन्नपितरोमीमदंत पितरोतीतृपंतपितरःपितरःशुंधध्वम् ॥ १० ॥ ॐभूर्भुवःस्वः मघेइहागच्छेहतिष्ठ॥ भगप्रणेतिभाग्यंतु ॐभगप्रणेतर्भगसत्यराधोभगेमांधियमुदवा ददन्नः ॥ भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्नृवंतःस्याम ॥११॥ ॐभूर्भुवःस्वः पूर्वाफा ल्गुनीहागच्छेहतिष्ठ ॥ दैव्यावध्वर्युरार्यमं ॐदैव्यावध्वर्यूआगतठंरथेनसूर्यत्वचामध्वा यज्ञठंसमंजायेतम्प्रक्तनथायंवेनाश्चित्रन्देवानाम् ॥ १२ ॥ ॐभूर्भुवःस्वः उत्तराफाल्गु

नीहागच्छेहतिष्ठ ॥ हस्तांविभ्राड्मंत्रेण ॐविभ्राड्बृहत्पीबतुसोम्यंमध्वायुदर्धद्यज्ञपता
वविन्हुतम् ॥ वातजूतोयोअभिरक्षतित्मनाप्रजाःपुपोषपुरुधाविराजति ॥ १३ ॥ ॐभूर्भु
वःस्वः हस्तइहागच्छइहतिष्ठ ॥ चित्रात्वष्टातुरीयत ॐत्वष्टातुरीयोऽअद्भुतऽइन्द्राग्नीपु
ष्टिवर्द्धना ॥ द्विपदाच्छन्दऽइंद्रियमुक्षागौर्नवयोदधुः ॥ १४ ॥ ॐभूर्भुवःस्वःचित्रेइ
हागच्छेहतिष्ठ ॥ इतिदक्षिणस्यांस्थाप्यानि ॥ पीवोअन्नेतिवायव्यं ॐपीवोअन्नारयिवृ
धः सुमेधाःश्वेतः सिषक्तिनियुतामभिश्रीः ॥ तेवायवेसमनसोवितस्थुर्विश्वेन्नरःस्व
पत्यानिचक्रुः ॥ ॐभूर्भुवःस्वः स्वातेइहागच्छेहतिष्ठ ॥ १५ ॥ इंद्राग्नीचद्विदैवतं ॐ
इंद्राग्नीआगतꣳसुतंगीर्भिर्नभोवरेण्यम् अस्यपातंधियेषिता ॥ १६ ॥ ॐ भूर्भुवः
स्वः विशाखेइहागच्छेहतिष्ठ ॥ नमोमित्रेतिमैत्रम् ॐनमोमित्रस्यवरुणस्यचक्षसे
महोदेवायतदृतꣳसपर्य्यंत दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशꣳसत ॥ १७॥

ॐभूर्भुवः स्वः मैत्रइहागच्छेहतिष्ठ ॥ सइषुहस्तैःपुरंदरं ॐसइषुहस्तैः सनिषङ्गिभिर्वशी
सꣳस्रष्टासयुधइंद्रोगणेन ॥ सꣳसृष्टजित्सोमपाबाहुशर्द्ध्युग्रधन्वाप्रतिहिताभिरस्ता
॥ १८ ॥ ॐभूर्भुवः स्वः ज्येष्ठइहागच्छेहतिष्ठ ॥ मूलंमातेवपुत्रंच ॐमातेवपुत्रंपृथिवी
पुरीष्यमग्निꣳस्वेयोनावभारुषा ॥ तांविश्वैर्देवैरृतुभिःसंविदानः प्रजापतिर्विश्वकर्मा
विमुंचतु ॥१९॥ ॐभूर्भुवः स्वः मूलइहागच्छेहतिष्ठ ॥ पूर्वाषाढामपाघमः ॐअपाघमप
किल्बिषमपकृत्यामपोरपः ॥अपामार्गत्वमस्मदपदुः ष्वप्न्यꣳसुव॥२०॥ॐभूर्भुवःस्वः
पूर्वाषाढेइहागच्छेहतिष्ठ ॥ विश्वेअद्योतिविश्वेशं ॐविश्वेऽअद्यमरुतोविश्वऊतीविश्वे
भवंत्वग्नयः समिद्धाः॥ विश्वेनोदेवाऽअवसागमंतुविश्वमस्तुद्रविणंवाजोऽअस्मे ॥२१॥
ॐभूर्भुवःस्वः उत्तराषाढेइहागच्छेहतिष्ठ॥ इतिप्रतीच्यांस्थाप्यानि॥ गायत्र्याभिजितं
न्यसेत् ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोन प्रचोदयात् ॥ २२ ॥

ॐभूर्भुवः स्वः अभिजितइहागच्छेहतिष्ठ ॥ श्रवणंविष्णुमंत्रेण ॐइदंविष्णुर्विंचक्रमेत्रे
धानिदधेपदं॥ समूढमस्यपांॅसुरे॥२३॥ॐभूर्भुवःस्वः श्रवणइहागच्छेहतिष्ठ॥वसोर्मंत्रे
णवासवं ॐवसोः पवित्रमसिशतधारंवसोः पवित्रमसिसहस्त्रधारम् ॥ देवस्त्वासविता
पुनातुवसोः पवित्रेणशतधारेणसुप्प्वाकामधुक्ष॥२४॥ ॐभूर्भुवःस्वः धनिष्ठेइहागच्छेह
तिष्ठ ॥ शतभिषांवरुणस्येति ॐवरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्ज्जनीस्त्थोवरुण
स्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऋतसदनमासीद ॥२५॥ ॐभूर्भुवः
स्वः शतभिषेइहागच्छेहतिष्ठ ॥ उतनोह्यजपादभं ॐउतनोहिर्बुध्न्यः शृणोत्वजऽएक
पात्पृथिवीसमुद्रः॥ विश्वेदेवाऋतावृधोहुवानास्तुतामंत्राःकविशस्ताऽअवंतु॥२६॥ॐभू
र्भुवःस्वःअजपादभइहागच्छेहतिष्ठ॥शिवोनामेत्यहिर्बुध्न्यं ॐशिवोनामासिस्वधितिस्ते
पितानमस्तेअस्तुमामाहिंॅसीः ॥ निवर्त्तयाम्यायुषेन्नाद्यायप्रजननायरायस्पोषायसुप्र

जास्त्वायसुवीर्याय॥ २७॥ ॐभूर्भुवःस्वःअहिर्बुध्न्यइहागच्छेहतिष्ठ ॥पौष्णंपूषंतवेनतुॐ
पूषंतवव्रतेवयन्नरिष्येमकदाचन ॥ स्तोतारस्तऽइहस्मसि ॥ २८ ॥ ॐभूर्भुवः स्वः रेवतिइ
हागच्छेहतिष्ठ ॥ इतिनक्षत्रस्थापनं ॥ योगेयोगेतिईशान्यांयोगानेवैकपुंजके ॐयोगेयो
गेतवस्तरं वाजेवाजेहवामहे॥ सखायऽइंद्रमूतये॥ १ ॥ॐभूर्भुवःस्वःयोगाःइहागच्छध्वमि
हतिष्ठध्वं॥ २७॥ भद्रंकर्णैतिमंत्रेणकर्णानम्नौप्रपूजयेत् ॐभद्रंकर्णेभिःशृणुयामदेवाभद्रंप
श्येमाक्षभिर्यजत्राः॥स्थिरैरंगैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः॥ १ ॥ॐभू
र्भुवःस्वःकरणाइहागच्छध्वमिहतिष्ठध्वं ॥ ११ ॥ ध्रुवीतिध्रुवंमध्येग्रहाणांचसतारकं ॥ ओं
ध्रुवासिध्रुवोयंयजमानोस्मिन्नायतनेप्रजयापशुभिर्भूयात् ॥ घृतेनद्यावापृथिवीपूर्येथामिं
द्रस्यच्छदिरासिविश्वजनस्यच्छाया ॥ १ ॥ ॐभूर्भुवःस्वः सतारकध्रुवइहागच्छेहतिष्ठ ॥
आदित्यमंडलेचैववामेचैवाधिदेवयोः ॥ पंचनद्योतिसारितःपत्रबाह्येतुपाश्चिमे ॐपंचनद्यः

सरस्वतीमपियंतिसस्रोतसः ॥ सरस्वतीतुपंचधासोदेशेभवत्सरित् ॥ १ ॥ ॐभूर्भु
वःस्वः सरितइहागच्छध्वमिहातिष्ठध्वं ॥ गुरुमार्तंडयोर्मध्येसप्तर्षयेतिवैऋषीन् ॐसप्त
ऋषयः प्रतिहिताः शरीरेसप्तरक्षांतिसदमप्रमादम् ॥ सप्तापःस्वपतोलोकमीयुस्तत्रजा
ग्रतोअस्वप्नजौसत्रसदौचदेवौ ॥ ॐभूर्भुवःस्वः सप्तऋषयइहागच्छध्वमत्रतिष्ठध्वम् ॥
इमंमेसागरान्सप्तसरितोधःप्रपूजयेत् ॐ इमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वाम
वस्युराचके ॥ ॐभूर्भुवःस्वः सागराइहागच्छध्वमत्रातिष्ठध्वं ॥ प्रपर्वतेतिमंत्रेणपर्वतानुत्त
रेयजेत् ॥ पंक्तिनक्षत्रयोर्मध्येपत्रबाह्येतथैवच ॥ ॐप्रपर्वतस्यवृषभस्यपृष्ठान्नावश्चरं
तिस्वसिचऽइयानाः ॥ ताऽआववृत्रन्नधरागुदक्ताअहिर्बुध्न्यमनुरीयमाणाः ॥ विष्णो
र्विक्रमणमसि विष्णोर्विक्रांतमसि विष्णोः क्रांतमसि ॥ १ ॥ ॐभूर्भुवः स्वः पर्वता
इहागच्छध्वमत्रतिष्ठध्वम् ॥ जवोजस्तेतिरैवंतंस्थापयेत्सूर्य्यतोप्ययधःॐऽजवोजस्तेवा

जिन्निंहितोगुहायःश्येनेपरीतोअचरच्चवातेते ॥ ननोवाजिन्बलवान्बलेनवाजाजिच्चभवश
मनेचपारयिष्णुः ॥ वाजिनोवाजतितोवाजꣳसरिष्यन्तोबृहस्पतेर्भागमवजिघ्रत
॥ ८ ॥ ॐभूर्भुवःस्वः रैवंतइहागच्छेहतिष्ठ ॥ सुपर्णोसीतिगरुडंउत्तरेबुधमंडले
ॐसुपर्णोसिगरुत्मांस्त्रिवृतेशिरोगायत्रंचक्षुर्बृहद्रथंतरेपक्षौ ॥ स्तोमआत्माछंदाꣳ
स्यंगानियजूꣳषिनाम सामतेतनूर्वामदेव्यंयज्ञायज्ञियंपुच्छंधिष्ण्याः शफाः सुपर्णोसि
गरुत्मांदिवंगच्छस्वः पत ॥ १ ॥ ॐभूर्भुवःस्वःगरुडइहागच्छेहतिष्ठ ॥ अत्रावसरेरुद्र
कलशस्थापनं ॥ भूरसीतिभूमिप्रार्थना ॥ ॐभूरसिभूमिरस्यदितिरासिविश्वधायाविश्व
स्यभुवनस्यधर्त्री॥पृथिवींयच्छपृथिवींदृꣳहपृथिवींमाहिꣳसीः॥महीद्यौरितिधान्याधारं
कृत्वा॥ॐमहीद्यौःपृथिवीचनऽइमंय्यज्ञंमिमिक्षताम्॥पिपृतान्नोभरीमाभिः॥१॥आजिघ्र
कलशमितिकलशस्थापनं॥ॐआजिघ्रकलशम्मह्यात्वाविशंत्विंदवः ॥ पुनरूर्ज्जानिवर्त्त

स्वसानःसहस्त्रंधुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ १ ॥ वरुणस्योत्तामित्यपः
पूर्य ॐवरुणस्योत्तंभनमसिवरुणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऋतसदन्यसिवरुणस्य
ऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ १ ॥ याऽओषधिरितिसर्वौषधीः प्रक्षि०
ॐयाऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगंपुरा॥ मनैनुबभ्रूणामहर्ठंशतंधामानिसप्तच ॥
॥१ ॥ धान्यमसीतिधान्यं ॥ ॐधान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वाव्यानाय
त्वा ॥दीर्घामनुप्रसितिमायुषेधान्देवोवः सविताहिरण्यपाणिः॥प्रतिगृभ्णात्वच्छिद्रेणपा
णिना चक्षुषेत्वामहीनाम्पयोसि ॥ १ ॥ अश्वत्थेवेतिपंचपल्लवं ॥ अश्वत्थोदुंबरप्लक्षचूत
न्यग्रोधपल्लवाः॥ पंचपल्लव० ॐअश्वत्थेवोनिषदनंपर्ण्णेवोवसतिष्कृता॥गोभाजऽइत्कि
लासथयत्सनवथपूरुषम् ॥ याःफलिनीतिफलं ॐयाःफलिनीर्याऽअफलाऽअपुष्पाया
श्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वर्ठंहसः ॥ हिरण्यगर्भेतिहिरण्यं ॐहिरण्यग

र्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्॥ सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हवि षा विधेम ॥ १ ॥ पूर्णा दर्वीत्युपरिष्टात्पूर्णपात्रं ॐ पूर्णा दर्वि परापत सुपूर्णा पुनरापत ॥ व स्नेव विक्रीणावहा इषमूर्जᳬ शतक्रतो ॥ १ ॥ याः फलिनीति श्रीफलं ॐ याः फलिनी र्याऽअफला अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानो मुंचंत्वᳬहसः ॥ १ ॥ सु जातोज्योतिषेति वस्त्रेण वेष्टनं॥ ॐ सुजातो ज्योतिषा सह शर्म्म वरूथमासदत्स्वः॥ वासो अ ग्ने विश्वरूपᳬ संव्ययस्व विभावसो ॥ १ ॥ असंख्याते ति संपूज्यो रुद्रो रुद्रघटां भासि ॥ ॐ असंख्याता सहस्राणि ये रुद्रा अधि भूम्यां॥ तेषाᳬ सहस्रयोजनेव धन्वानि तन्मासि॥ १ ॥ ॐ भूर्भुवः स्वः रुद्र इहागच्छेह तिष्ठ॥ प्रजापतेरग्रभागे शनिमंडलके शुभे ॥ पूज्यो विष्णुः स्वसू क्तेन षोडशर्चैनतत्रवै ॥ १ ॥ विष्णुसूक्तस्तु षोडशकंडिकात्मकः॥ ॐ सहस्रशीर्षा पुरुषः स हस्राक्षः सहस्रपात्॥ स भूमिᳬ सर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् इत्यादि ॥ १६ ॥ ॐ भूर्भुवः

स्वः विष्णोइहागच्छेहतिष्ठ ॥ वास्तोष्पतेतिमंत्रेणवास्तुंवैराहुमंडले ॥ ॐवास्तोष्पतेप्र
तिजानीह्यस्मान्स्वावेशोअनमीवोभवानः ॥यत्त्वेमहेप्रतितन्नोजुखस्वशन्नोअस्तुद्विपदे
शंचतुष्पदे ॥ १ ॥ अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवएधिनः ॥
॥ २ ॥ ॐभूर्भुवः स्वः वास्तोष्पतेइहागच्छेहतिष्ठ ॥ गणानांत्वेतिवायव्यांगणेशंकेतुमं
डले ॐगणानांत्वेति० ॥ १ ॥ ॐभूर्भुवः स्वः गणेशइहागच्छेहतिष्ठ॥ ग्रहाग्नेयांसोमदले
रुद्राण्याअग्रभागतः॥ नमोस्तुसर्पेभ्यइतिक्षेत्रपालंप्रपूजयेत्॥ॐनमोस्तुसर्पेभ्योयेकेच
पृथिवीमनु॥ जेअंतरिक्षेजेदिवितेभ्यः सर्पेभ्योनमः ॥१॥ ॐभूर्भुवः स्वः क्षेत्रपालइहा
गच्छेहतिष्ठ ॥ रुद्रकुंभाग्रतःपूज्याचामुंडाजातवेदसे ॥ ॐजातवेदसेसुनवामसोममरा
तीयतोनिदहातिवेदः ॥ सनःपरिषदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ १ ॥ ॐ
भूर्भुवःस्वः चामुंडेइहागच्छेहतिष्ठ ॥ग्रहाद्दक्षिणदिग्भौमसदनेषण्मुखादधः॥ योवःशिवे

तिगौर्यादिमातरश्चैवपूजयेत् ॥ ॐ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिव
मातरः ॥१ ॥ ॐ भूर्भुवःस्वःगौर्यादिमातरइहागच्छध्वमत्रतिष्ठध्वं॥अथवेदस्थापनं॥सू
र्याच्चपूर्वदिग्भागेअग्निमीळेऋचाननः ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं॥होतारंर
त्नधातमं ॥१॥ ॐ भूर्भुवःस्वः ऋग्वेदइहागच्छेहतिष्ठ॥इषेत्वेतियजुर्वेदंसूर्य्याद्दक्षिणतो
न्यसेत् ॐ इषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणऽआ
प्यायध्वमघ्न्याऽइंद्रायभागं प्रजावतीरनमीवाअयक्ष्मामावस्तेनऽईशतमाघसर्ठसोध्रु
वाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ २ ॥ ॐ भूर्भुवः स्वः यजु
र्वेदइहागच्छेहातिष्ठ ॥सूर्याच्चपश्चिमेसामअग्नआयाहिमंत्रतः ॥ ॐ अग्नआयाहिवीतये
गृणानोहव्यदातये॥निहोतासत्सिबर्हिषि॥३॥ॐ भूर्भुवः स्वः सामवेदइहागच्छेहतिष्ठ॥
रवेरुत्तरदिग्भागेशन्नोदेवीत्यथर्वणम् ॐ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंय्योर

भिस्त्रवंतुनः ॥ ४ ॥ ॐभूर्भुवः स्वः अथर्वणइहागच्छेहतिष्ठ ॥ अथदिक्पालस्थापनं ॥
इंद्रादितः क्रमाद्दिक्षुरिंद्रादीनष्टपूजयेत् ॥ इंद्रोवह्निःपितृपतिर्नैरृतोवरुणोमरुत् ॥ कुबेरई
शः पतयः पूर्वादीनांदिशांक्रमात् ॥ अंतरिक्षंपूर्वभागेधरापूज्यातुपश्चिमे ॥ इंद्रंत्रातारमं
त्रेण ॐत्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रं ॥ह्वयामिशक्रम्पुरुहूतमिंद्रꣳ
स्वस्तिनोमघवाधात्विंद्रः ॥ १ ॥ एह्येहिसर्वामरसिद्धसाद्ध्यैरभिष्टुतोवज्रधरामरेश ॥
संवीज्यमानोप्सरसांगणेनरक्षाध्वरंनोभगवन्नमस्ते ॥ २ ॥ ॐभूर्भुवः स्वः इंद्रइहा
गच्छेहतिष्ठ ॥ त्वंनोअग्नेहुताशनम् ॐत्वंनोऽअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य ॥
त्रातातोकस्यतनयेगवामस्यनिमेषꣳरक्षमाणस्तवस्ते ॥ २ ॥ एह्येहिसर्वामररुद्रसं
घैर्मुनिप्रवीरैरभितोभिजुष्ट ॥ तेजोवतालोकबलेनसार्द्धंरक्षाध्वरन्नोभगवन्नमस्ते ॥२॥ ॐ
भूर्भुवः स्वः अग्नेइहागच्छेहतिष्ठ ॥ यमंसुगन्तुपंथेति ॐसुगन्तुपंथांप्रदिशन्नएहिज्यो

तिष्मध्येहयजरन्नआयुः ॥अपैतुमृत्युरमृतंमआगाद्वैवस्वतोनोअभयंकृणोतु ॥ ३ ॥ए
ह्येहिवैवस्वतधर्मराजसर्वामरैरर्चितधर्ममूर्तिः ॥ शुभाशुभानांफलभावनस्त्वंशिवायनः
पाहिमखंनमस्ते ॥ ३ ॥ ॐभूर्भुवः स्वः यमइहागच्छेहतिष्ठ ॥ असुन्वंतेतिनैर्ऋतिम
ॐअसुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यस्मदिच्छसातइ
त्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥४॥ एह्येहिरक्षोगणनायकस्त्वंविशालवेतालपिशाचसं
घैः॥ममाध्वरंपाहिशुभादिनाथलोकेश्वरस्त्वंप्रणमामिनित्यम् ॥४॥ ॐभूर्भुवःस्वःनिर्ऋ
तेइहागच्छेहतिष्ठ ॥ तत्त्वायामिजलाध्यक्षं ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेय
जमानोहविर्भिः॥अहेडमानोवरुणेहबोध्युरुशंऽसमानऽआयुःप्रमोषीः॥ एह्येहियादोगण
वारिधीनांगणेनमेघेनसहाप्सरोभिः ॥ विद्याधरेंद्रामरगीयमानः पाहित्वमस्मान्भगवन्न
मस्ते ॥५॥ ॐभूर्भुवः स्वः वरुणइहागच्छेहतिष्ठ॥वायुमानोनियुद्भिना ॐआनोनियुद्भिः

शतिनीभिरध्वरᳬसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोअस्मिंमत्सवनेमादयस्वयूयंपातस्व
स्तिभिः सदानः ॥ ६ ॥ एह्येहियज्ञेममरक्षणा यमृगाधिरूढ सहसिद्धसंघैः ॥ प्राणा
धिपोहव्यभुजः सहायगृहाणपूजांभगवन्नमस्ते ॥ ६ ॥ ॐभूर्भुवः स्वः वायोइहागच्छेह
तिष्ठ ॥ वयंसोमेतिधनदम् ॐवयᳬसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेम
हि ॥ ७ ॥एह्येहियज्ञेश्वरयज्ञरक्षांविधत्स्वनक्षत्रगणेनसार्द्धं॥ सर्वौषधीभिःपितृभिः सहै
वगृहाणपूजांभगवन्नमस्ते ॥ ७ ॥ ॐभूर्भुवःस्वःधनदइहागच्छेहतिष्ठ ॥ तमीशानेतिशं
करम् ॐतमीशानंजगततस्थुषस्पतिंधियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसा
मसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ७ ॥ एह्येहिविश्वेश्वरनस्त्रिशूलकपालखट्वांगवरेण
सार्द्धम् । लोकेशभूतेश्वरयज्ञसिद्ध्यैगृहाणपूजांभगवन्नमस्ते ॥ ८ ॥ ॐभूर्भुर्वःस्वः
शंकरइहागच्छेहतिष्ठ ॥ अस्मेरुद्रेत्यंतरिक्षम् ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्ये

भरहूतौसजोषाः ॥ यःशर्कंसतेस्तुवतेधायिपज्रइंद्रज्येष्ठाअस्मांअवंतुदेवाः॥१॥ एह्येहि
विश्वाधिपतेमुनींद्रलोकेनसार्द्धंपितृदेवताभिः ॥ सर्वस्यधातात्वमनंतकीर्तीरक्षाध्वरंनः
सततंशिवाय ॥ ९ ॥ ॐभूर्भुवःस्वःब्रह्मन्निहागच्छेहतिष्ठ ॥ स्योनापृथिविनोधरां ॐ
स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ १ ॥ एह्येहिपाता
लधरानगेंद्रनागांगनाकिन्नरगीयमानः ॥ रक्षोरगेंद्रामरलोकसार्द्धमनंतरक्षाध्वरमस्म
दीयम् ॥ १० ॥ ॐभूर्भुवः स्वः धराधिपतेअनंतइहागच्छेहतिष्ठ ॥ अथचतुःष
ष्टियोगिनीनामावाहनं॥आग्नेय्यांयोगिनीर्न्यसेदित्युक्तेः॥ अग्नावेकपुंजकेवाचतुःषष्टिद
लात्मकेभिन्नमंडलेस्थापयेत् ॥ ॐआवाहयाम्यहंदेवींयोगिनींपरमेश्वरीम् ॥ योगा
भ्यासेनसंतुष्टांपरध्यानसमन्विताम् ॥ १ ॥ दिव्यज्वालातिसंकाशादिव्यज्वालातिलो
चना ॥ मूर्तिमतीअमूर्ताचउग्राचैवोग्ररूपिणी ॥ २ ॥ यज्ञंकुर्वंतुनिर्विघ्नंश्रेयोयच्छंतुमा

तरः ॥ दिव्ययोगामहायोगासिद्धियोगागणेश्वरी ॥ ३ ॥ प्रेताक्षीडाकिनीकालीका
लरात्रिर्निशाचरी ॥ हुंकारीसिद्धिवैतालीखर्परीभूतयामिनी ॥ ४ ॥ उर्द्ध्वकेशीविरूपा
क्षीशुष्कांगीमांसभोजिनी ॥ फेत्कारीवीरभद्राक्षीधूम्राक्षीकलहप्रिया ॥ ५ ॥ रक्ताच
घोररक्ताक्षीविरूपाक्षीभयंकरी ॥ चौरिकामारिकाचंडीवाराहीमुंडधारिणी ॥ ६ ॥ भैर
वीचक्रिणीक्रोधादुर्मुखीप्रेतवाहिनी ॥ कंटकीदीर्घलंबोष्ठीमालिनीमंत्रयोगिनी ॥ ७ ॥
कालाग्निमोहिनीचक्रीकंकालीभुवनेश्वरी ॥ कुंडलाक्षीलुहीलक्ष्मीयमदूतीकरालिनी
॥ ८ ॥ कौशिकीभक्षणीयक्षीकौमारीयंत्रवाहिनी ॥ विशालाकामुकीव्याघ्रीयाक्षिणीप्रे
तभूषणी ॥ ९ ॥ धूर्जटाविकटाघोराकपालाचैवलांगली ॥ चतुः षष्टिः समाख्याताया
गिन्योहिवरप्रदाः ॥ १० ॥ त्रैलोक्येपूजितानित्यंदेवमानवयोगिभिः ॥ ॐभूर्भुवः स्वः
योगिन्यः इहागच्छंतुविहतिष्ठंतु ॥ मध्येतुपंचभूतानिविश्वकर्माणमेवच ॐभूतायित्वा

नारातयेस्वरभिविष्येस्वंदर्ठंहंतांदुर्याः पृथिव्यामुर्व्यंतरिक्षामन्वेमिपृथिव्यास्त्वानाभौ सादयाम्यादित्याउपस्थेग्नेहव्यर्ठंरक्ष ॥ १ ॥ ॐभूर्भुवः स्वः पंचभूतानिइहागच्छं त्विहतिष्ठंतु ॥ ॐविश्वकर्मन्हविषावर्द्धंतेनत्रातारमिंद्रमकृणोरवध्यम् ॥तस्मैविशः समन मंतपूर्वीरयमुग्रौविहव्योयथासत ॥ १ ॥ ॐभूर्भुवः स्वःविश्वकर्मन्निहागच्छेहतिष्ठ ॥ ततस्तेषांप्रातिष्ठांकुर्यात् ॥ अक्षतानादाय ॐतदस्तुमित्रावरुणातदग्नेशंय्योरस्मभ्य मिदमस्तुशस्तम् ॥ अशीमहिगाधमुतप्रतिष्ठान्नमोदिवेबृहतेसादनाय ॥ १ ॥ ॐमनो जूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञर्ठंसमिमंदधातु ॥विश्वेदेवासऽइह मादयंतामों३प्रतिष्ठ ॥ २ ॥ मनोजूतिर्जुषतामाज्यस्येतिमनसावाइदर्ठंसर्वमा प्तन्तन्मनसैवैत्सर्वमाप्नोति बृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञर्ठंसमिमंदधात्वितियद्विवृ ढंतत्संदधाति विश्वेदेवासऽइहमादयंतामिति सर्ववै विश्वेदेवाः—सर्वेणैवैतत्संदधाति

सयदि कामयेद्भूयात्प्रतिष्ठेति ॥ ३ ॥ एषवै प्रतिष्ठानामयज्ञो यत्रैतेनयज्ञेनयजंते ॥
सर्वमेवप्रतिष्ठितंभवतु ॥ ४ ॥ आदित्यादिनवग्रहाः स्थापितदेवतारुद्रकलशसहि
ताःसुप्रतिष्ठावरदाभवंतु ॥ इत्यक्षतान्विकीर्य यजमानः पूजांकुर्यात् ॥ तत्र ॐअद्ये
त्यादि मासेपक्षेतिथौवासरेअमुकगोत्रोमुकशर्मावर्मागुप्तोवाहं सकलशुभफलप्राप्ति
कामः आदित्यादिनवग्रहाणांस्थापितदेवतानांचलघुपूजनंकरिष्ये ॥ सूर्यादिनवग्र
हेभ्यःस्थापितदेवताभ्योनमः ॥ आसनं पाद्यं अर्घ्यं आचमनं स्नानं वस्त्रं उपवीतम्
गंधं ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रिय
म् ॥ अक्षतान् ॐअक्षन्नमीमदंतह्यवप्रिया अधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठ
यामतीयोजान्विंद्रतेहरी ॥ १ ॥ पुष्पाणि नानाविधिनिदिव्यानिऋतुकालोद्भवानिच ॥
मयार्पितानिपुष्पाणिपूजार्थंप्रतिगृह्यताम् ॥ १० ॥ धूपं ॐधूरसिधूर्वधूर्वंतंधूर्वतंयो

स्मान्धूर्वतितंधूर्वयंवयंधूर्वामः ॥ देवानामसिवह्नितमठंसस्नितमंपप्रितमंजुष्टतमंदेवहू
ततमम् ॥ ११ ॥ दीपं ॐअग्निर्ज्योतिज्योतिराग्निःस्वाहासूर्योज्योतिज्योतिःसूर्यः
स्वाहा ॥ अग्निर्वर्चोज्योतिर्वर्चःस्वाहा सूर्य्योवर्चोज्योतिर्वर्चःस्वाहा ज्योतिःसूर्य्यः
सूर्योज्योतिःस्वाहा ॥ १२ ॥ नैवेद्यं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितम् ॥
भक्ष्यभोज्यसमायुक्तंगृह्यतांममभक्तितः ॥१३॥ आचमनं नागवल्लीदलंदिव्यंपूगीकर्पू
रसंयुतम्॥ वक्रंसुरभिकृत्स्वादुतांबूलंप्रतिगृह्यतां ॥१ ॥ फलं ॐयाःफलिनीर्याअफला
अपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूस्तानोमुंचंत्वठंहसः ॥ १४ ॥ दक्षिणां ॐहि
रण्यगर्भः समवर्त्ततताग्रेभूतस्यजातः पतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदे
वायहविषाविधेम ॥१५॥ नमस्कारः ग्रहाराज्यंप्रयच्छंतिग्रहाराज्यंहरंतिच ॥ ग्रहैस्तु
व्यापितंसर्वंत्रैलोक्यंसचराचरम् ॥ १६ ॥ अद्यपूर्वोच्चरितविशेषणविशिष्टायांपुण्यति

थौनवग्रहाणांस्थापितदेवतानांचकृतस्यलघुपूजनविधेर्यन्न्यूनमतिरिक्तंतत्सर्वंवभतां
ब्राह्मणानांवचनात्श्रीगणेशांबिकयोःप्रसादात्परिपूर्णमस्तु ॥ इतिग्रहस्थापनपूजनम् ॥
अथव्रतोद्यापनादिकार्यविशेषसर्वतोभद्रमंडलंनिर्माय तद्देवता आवाहयसंपूज्यच
तन्मध्येहेमराजतताम्रमृण्मयान्यतमंकुंभंपंचरत्नाद्युपेतंस्थापयेत् ॥ तद्यथा–भूरसीति
भूमिप्रार्थना ॥ महीद्यौरितिधान्याधारंकृत्वा आजिघ्रमितिकलशं वरुणस्योत्तमि
ति जलं याऽओषधीरितिसर्वौषधिप्रक्षेपः धान्यमसीतिधान्यं अश्वत्थेवेतिपचपल्लवान्
याःफलिनीतिफलं हिरण्यगर्भेतिहिरण्यं सुजातोज्योतिषेतिवस्त्रेणावेष्टनम् तदुपरि
पूर्णादर्वीतितंडुलेपेतंताम्रपात्रंनिधाय तस्मिन्प्रधानप्रतिमांस्थापयेत ॥ स्वर्णादि
नाप्रधानप्रतिमांनिर्मायाग्न्युत्तारणंकृत्वा तद्यथा मूर्तौघृतंकृत्वावस्त्रेणावेष्टयाकुशेनस्पृ
ष्ट्वा मंत्रान्पठेत् ॥ ॐ समुद्रस्य त्वावकयाग्नेपरिव्ययामसि पावकोअस्मभ्यर्ठं

शिवोभव ॥ १ ॥ हिमस्यत्वाजरायुणाग्नेपरिव्ययामसिपावको ऽअस्मभ्यꣳशि
वोभव ॥ २ ॥ उपज्मन्नुपवेतसेवतरनदीष्वा ॥ अग्नेपित्तमपामासिमंडूकिताभिराग
हि ॥ येमन्नोयज्ञम्पावयवर्णꣳशिवंकृधि ॥ ३ ॥ अपामिदंन्ययनꣳसमुद्रस्यनिवेशन
म् ॥ अन्यांस्तेअस्मत्तपंतुहेतयः पावकोअस्मभ्यꣳशिवोभव ॥ १ ॥ अग्नेपावकरो
चिषामंद्रयादेवजिह्वया ॥ आदेवान्वाक्षियजिच ॥ ५ ॥ सनःपावकदीदिवोग्नेदेवा२ँ
इहावह ॥ उपयज्ञꣳहविश्चनः ॥ ६ ॥ पावकयाश्चित्तयंत्याकपाक्षामन्नुरुचउषसो
नभानुना ॥ तूर्वन्नयामन्येतशस्यनूरणऽआयोघृणेनततृषाणोऽजरः ॥ ७ ॥ नमस्ते
हरसेशोचिषेनमस्तेअस्त्वर्चिषे ॥ अन्यांस्तेअस्मत्तपंतुहेतयःपावकोअस्मभ्यꣳ
शिवोभव ॥ ८ ॥ ततोजलेनप्रक्षाल्यप्राणप्रतिष्ठांकुर्यात् ॥ प्रतिमायाः कपोलौदक्षिणपा
णिनास्पृष्ट्वा मंत्राःपठनीयाः ॥ प्राणप्रतिष्ठा मंत्रस्यविष्णुरुद्रौऋषीऋग्यजुःसामानिच्छ

न्दांसि प्राणाख्यादेवता ॐआंबीजं र्‍हींशक्तिः क्रोंकीलकं यंरंलंवंशंषंसंहंहंसः एताः शक्तयः मूर्तिप्रतिष्ठापनेविनियोगः ॥ ॐआंर्‍हींक्रोंयंरंलंवंशंषंसंहंहंसः देवस्यप्राणाइह॥ पुनरुच्चार्यदेवस्यसर्वेंद्रियाणिइह ॥ पुनरुच्चार्यदेवस्यत्वक्पाणिपादपायूपस्थादीनिइह॥ पुनरुच्चार्यदेवस्यवाङ्मनश्चक्षुःश्रोत्रप्राणाइहागत्यसुखेनचिरंतिष्ठंतुस्वाहा ॥१॥ प्राणप्रतिष्ठांविधायध्यायेत्॥ एवंप्राणप्रतिष्ठांकृत्वाषोडशोपचारैःपूजयेत् ॥आवाहनं ॥ आगच्छागच्छदेवेशतेजोराशेजगत्पते ॥ क्रियमाणांमयापूजांगृहाणसुरसतम ॥ ॥ १ ॥ आसनं ॥ नानारत्नसमायुक्तंकार्त्तस्वरविभूषितं ॥ आसनंदेवदेवेशप्रीत्यर्थं प्रतिगृह्यताम् ॥ २ ॥ पाद्यं ॥ नमोनमस्तेदेवेशनमस्तेपुरुषोत्तम ॥ नमस्तेसर्वरूपायपाद्यंनः प्रतिगृह्यताम् ॥३॥ अर्घ्यं ॥ नमस्तेदेवदेवेशनमस्तेधरणीधर ॥ नमस्तेकमलाकांतअर्घ्यंनःप्रतिगृह्यताम् ॥ ४ ॥ आचमनं ॥ कर्पूरवासितंतोयंमंदाकिन्याः समाहृ

तं ॥ आचम्यतांजगन्नाथमयादत्तंहिभक्तितः ॥ ४ ॥ स्नानं ॐवरुणस्योत्तंभनमसिव रुणस्यस्कंभसर्जनीस्थोवरुणस्यऋतसदन्यसिवरुणस्यऋतसदनमसिवरुणस्यऋतस दनमासीद ॥ ६ ॥ इतिजलस्नानम् ॐपयः पृथिव्यांपय ओषधीषु पयोदिव्यंत रिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसंतुमह्यम् ॥ ६ ॥ इतिपयःस्नानं ॐदधिक्राव्णो अकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूꣳषितारिषत् ॥ ६ ॥ इ तिदधिस्नानं ॐघृतंघृतपावानः पिबतवसांवसापावानः पिबतांतरिक्षस्यहविरसिस्वा हा ॥ दिशःप्रदिशआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा॥ ६ ॥ इतिघृतस्नानं ॐमधु वाताऋतायतेमधुक्षंतिसिंधवः ॥ माध्वीर्नः संत्वोषधीः ॥ १ ॥ मधुनक्तमुतोषसोम धुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनःपिता ॥ २ ॥ मधुमान्नोवनस्पतिर्म्मधुमाꣳअ स्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ ६ ॥ इतिमधुस्नानं ॥ ॐअपाꣳरसमुद्वयसꣳसू

येंसंतऽसमाहितम् ॥ अपाꣳरसस्ययोरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसींद्राय त्वाजुष्टंगृह्णाम्येषतेयोनिरिंद्रायत्वाजुष्टमम् ॥ ६ ॥ इतिशर्करास्नानं ॐवसोःपवि त्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेण शतधारेणसुप्वाकामधुक्षः ॥ इतिजलस्नानम् ॐपंचनद्यः सरस्वतीमपियंतिस स्रोतसः ॥ सरस्वतीतुपंचधासोदेशेभवत्सरित् ॥ १ ॥ गंगाचयमुनाचैवगोदावरिस सरस्वती ॥ तापीपयोष्णीरेवाचताभ्यःस्नानार्थमागतं ॥ तोयमेतत्सुखस्पर्शंस्नानाय प्रतिगृह्यताम् ॥ १ ॥ इतिगंगाजलस्नानम् सर्वभूषाधिकेदेवलोकलज्जानिवारणे ॥ मयो पपादितेतुभ्यंवाससीप्रतिगृह्यताम् ॥ १ ॥ इतिवस्त्रम् ॥ दामोदरनमस्तेस्तुत्राहिमांभव सागरात् ॥ ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम ॥ १ ॥ इतियज्ञोपवीतं ॐअꣳशुना तेअꣳशुःपृच्यतांपरुषापरुः ॥ गंधस्तेसोममवतुमदायरसोअच्युतः ॥ १ ॥ श्रीखंडंचंद

नंदिव्यंगंधाढ्यंसुमनोहरं ॥ विलेपनंसुरश्रेष्ठप्रीत्यर्थंप्रतिगृह्यताम् ॥ १ ॥ इतिगंधं ॐ अक्षन्नमीमदंतह्यवप्रियाअधूषत ॥ अस्तोषतस्वभानवोविप्रान्नाविष्ठयामती॥योजान्विंद्रतेहरी ॥ १ ॥ इत्यक्षतान् ॐकांडात्कांडात्प्ररोहंतीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ १ ॥ इतिदूर्वा नानाविधानिदिव्यानिऋतुकालोद्भवानि च ॥ मयार्पितानिपुष्पाणिपूजार्थंप्रतिगृह्यतां ॥ १ ॥ इतिपुष्पं ॐधूरसिधूर्वधूर्वतंधूर्वतंयोस्मान्धूर्वतितंधूर्वयंवयंधूर्वामः ॥ देवानामसिवह्नितमर्ठंसस्नितमंपप्रितमंजुष्टतमंदेवहूततमम् ॥ वनस्पतिरसोत्पन्नोगंधाढ्योधूपउत्तमः ॥ आघ्रेयःसर्वदेवानां धूपोयंप्रतिगृह्यताम्॥ १ ॥ इतिधूपं ॐअग्निर्ज्योतिर्ज्योतिरग्निःस्वाहासूर्य्योज्योतिर्ज्योतिःसूर्य्यः स्वाहा ॥ अग्निर्वर्च्चोज्योतिर्वर्च्चःस्वाहासूर्योवर्चोज्योतिवर्चःस्वाहाज्योतिःसूर्यःसूर्य्योज्योतिः स्वाहा ॥ १ ॥ आज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया॥ दीपं

गृहाणदेवेशत्रैलोक्यतिमिरापहम् ॥ २ ॥ इतिदीपं अन्नपतेन्नस्यनोधेह्यनमीवस्यशु
ष्मिणः ॥ प्रप्रदातारंतारिषऽऊर्ज्जन्नोधेहिद्विपदेचतुष्पदे ॥ १ ॥ अन्नंचतुर्विधंस्वादुरसैः
षड्भिः समन्वितं ॥ भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां॥ २ ॥ इतिनैवेद्यं आचमनं
ओं याःफलिनीर्य्याअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंन्त्व
ठंहसः ॥ १ ॥ इदंफलंमयादेवस्थापितं पुरतस्तव ॥ तेनमेसफलावाप्तिर्भवेज्जन्मनिज
न्मनि ॥ २ ॥ इतिफलं पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं ॥ कर्पूरादिसमायुक्तंतांबू
लंप्रतिगृह्यताम् ॥ १ ॥ इतितांबूलं ॐ हिरण्यगर्भः समवर्त्तताग्रेभूतस्यजातः पतिरे
कऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ १ ॥ हिरण्यग
र्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ १ ॥ इति
दक्षिणां ॥ चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच ॥ त्वमेवसर्वज्योतींषिआर्तिक्यंप्रति

गृह्यताम् ॥ इतिनीराजनं ॥ नमस्तेपुंडरीकाक्षनमस्तेह्यमरप्रिय ॥ नमस्तेकमलाकांत वासुदेवनमोस्तुते ॥ १ ॥ इति पुष्पांजलिंदद्यात् ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तानितानिविनश्यंतुप्रदक्षिणपदेपदे ॥ १ ॥ इति प्रदक्षिणा ॥ नमःसर्वहितार्थायजगदाधारहेतवे ॥ साष्टांगोयंप्रणामस्तुप्रयत्नेनमयाकृतः ॥ १ ॥ इतिनमस्कारः॥ ततोयजमानस्यातिलकंकृत्वा कंकणंबध्नीयात् ॥ इतिप्रधानपूजनविधिः ॥ ततः सिद्धेचरौ ज्वलत्तृणादिचर्वाज्ययोरुभयोरुपरिभ्रामयित्वा वह्नौतत्प्रक्षेपः ॥ ततःस्रुवप्रतपनंत्रिः ॥ ततःसंमार्जनकुशानामग्रैरंतरतोमूलैर्बाह्यतःस्रुवंसंमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिःप्रताप्य दक्षिणतः कुशोपरिनिदध्यात् ॥ ततःआज्यमग्नितश्चरोःपूर्वेणानीयाग्रेधृत्वा आज्यपाश्चिमेनचरुमानीयाज्यस्योत्तरतोनिदध्यात् ॥ ततःपवित्राभ्यां आज्येप्रोक्षणीवदुत्पवनं ॥ अवेक्ष्यसत्यपद्रव्येतन्निरसनम् ॥ ततःपूर्ववत्प्रोक्षण्युत्पवनं

ततउत्थायोंपयमनकुशानादाय प्रजापतिंमनसाध्यात्वातूष्णींघृताक्ताः समिधस्तिस्रः अग्नौक्षिपेत् ॥ समिदोभ्यादायस्वाहा ॥ अथोपविश्यसपवित्रप्रोक्षणीजलेनसहविष्कमग्निंप्रणीताब्रह्मसहितंप्रदक्षिणक्रमेणपर्युक्ष्य पवित्रेप्रणीतापात्रेधृत्वाप्रोक्षणीपात्रं स्वस्थाने निदध्यात् ॥ ब्रह्मणान्वारब्धः पातितदक्षिणजानुः स्रुवेणाज्याहुतीर्जुहुयात् ॥ तत आहुतिचतुष्टयंप्रत्याहुत्यानंतरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ॥ आघारावाज्यभागौतुजुहुयात्पंचवारुणम् ॥ समिदाज्यचरोर्होमंतिलहोमक्रमेणच ॥ १ ॥ सर्वत्रहोमाहुतौप्रणवंपूर्वमुच्चार्य स्वाहाकारांतोहोमःकार्यः ॥ यथादैवतंचतुर्थ्यंतंनममेतित्यागंकुर्यात् ॥ ततः समिद्धतमेग्नौ ॐप्रजापतयेस्वाहा इदंप्रजापतयेनमम ॥ १ ॥ इतिमनसा ॐइंद्रायस्वाहाइदमिंद्रायनमम ॥ २ ॥ इत्याघारौ ॐअग्नये स्वाहा इदमग्नये० ॥ १ ॥ ॐसोमायस्वाहा इदंसोमायनमम ॥ २ ॥ इत्याज्यभागौ

ततोनन्वारब्धःस्थालीपाकेनहोमः ॥ ॐप्रजापतयेस्वाहा इदंप्रजापतयेनमम इति मनसा ॥ ततोन्वारब्धोजुहुयात् ॥ तत्तदाहुत्यनंतरंस्रुवावस्थितहुतशेषस्यप्रोक्षण्यांप्रक्षेपः ॥ शांतिकेवरदनाम्नेवैश्वानरायइदमावाहनंइदमत्रचंदनंचपुष्पं ॥ ततः ॐवरुणस्योत्तंभनमसि वरुणस्यस्कंभसर्ज्जनीस्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसिवरुणस्यऋतसदनमासीद ॥ १ ॥ ॐवरुणायस्वाहा इदंवरुणायनमम ॥ अथग्रहाणांसमिधः॥ अर्कः पलाशः खदिरअपामार्गोथपिप्पलः ॥ उदुंबरः शमीदूर्वाकुशाश्चसमिधः क्रमात् ॥ १ ॥ अलाभेतुप्रकर्त्तव्याः सर्वाः पालाशवृक्षजाः ॥ प्रतिग्रहंचजुहुयाच्छतमष्टोत्तरंतथा ॥ २ ॥ अष्टाविंशतिरष्टौवा यजेत्पंचामृतप्लुताः ॥ प्रथमंप्रत्येकैकाज्याहुतिंहुत्वापश्चात्प्रत्येकमष्टोत्तरशतसंख्याकाभिरष्टाविंशतिभिरष्टभिर्वा तिलधान्याज्याहुतिभिः समिद्भिर्जुहुयात् ॥ अथहोममंत्राः ॥ आकृष्णेतिहिरण्यस्तूपांगिरसऋषिः

सविता देवता त्रिष्टुप्छंदः ॥ आदित्यप्रीतयेतिलधान्याज्यार्कसमिद्धोमेविनियोगः ॥ ॐआकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवो यातिभुवनानिपश्यन् ॥ आदित्यायस्वाहा इदमादित्याय ॥ १ ॥ इमंदेवाइतिमंत्रस्य वरुणऋषिः सोमोदेवता सोमप्रीतयेतिलधान्याज्यपालाशसमिद्धोमेविनियोगः ॥ ॐ इमन्देवाऽअसपत्न्यꣳसुवध्वम्महतेक्षत्राय महतेज्यैष्ठ्यायमहतेजानराज्यायेन्द्रस्ये न्द्रियाय ॥ इमममुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकं ब्राह्म णानाꣳराजा ॥ सोमायस्वाहा इदंसोमाय ॥ २ ॥ अग्निर्मूर्द्धेतिमंत्रस्य विरूपा क्षऋषिः अंगारकोदेवता गायत्रीच्छंदः भौमप्रीतयेतिलधान्याज्यखदिरसमिद्धोमे विनियोगः॥ ॐअग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्व ति ॥ भौमायस्वाहाइदंभौमाय ॥ ३ ॥ उद्बुध्यस्वेतिमंत्रस्य परमेष्ठीऋषिः बुधोदेव

ता त्रिष्टुप्छंदः बुधप्रीतयेतिलधान्याज्यापामार्गसमिद्धोमेविनियोगः॥ ॐउद्बुध्यस्वाग्ने
प्रतिजागृहित्वमिष्टापूर्तेसंसृजेथामयंच ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदे
वायजमानश्चसीदत ॥ ४ ॥ ॐबुधायस्वाहा इदंबुधाय ॥ ४ ॥ बृहस्पतेतिमंत्र
स्य गृत्समदऋषिः बृहस्पतिर्देवता त्रिष्टुप्छंदः बृहस्पतिप्रीतयेतिलधान्याज्यपि
प्पलसमिद्धोमेविनियोगः ॥ ॐ बृहस्पतेअतियदर्य्योऽअर्हाद्युमद्विभातिक्रतुमज्ज
नेषु ॥ यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ ॐबृहस्पतयेस्वाहा इदं
बृहस्पतयेनमम ॥ ५ ॥ अन्नात्परिस्रुतेतिमंत्रस्य अश्विसरस्वतींद्राऋषयः शुक्रोदेव
तातिजगतीछन्दः शुक्रप्रीतयेतिलधान्याज्योदुंबरसमिद्धोमेविनियोगः॥ ॐअन्नात्परि
स्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयः ॥ सोमंप्रजापतिर्ऋतेनसत्यमिंद्रियंविपानंशुक्र
मंधसऽइंद्रस्येंद्रियमिदंपयोमृतंमधु ॥ शुक्रायस्वाहाइदंशुक्राय ॥ ६ ॥ शन्नोदेवी

तिमंत्रस्य दध्यङ्ङाथर्वणऋषिः शनिर्देवता गायत्रीछंदः शनिप्रीतयेतिलधान्याज्य शमीसमिद्धोमेविनियोगः ॥ ॐ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंय्योरभिस्रवंतुनः ॥ शनैश्चरायस्वाहा इदंशनैश्चराय ॥ ७ ॥ कयानश्चित्रेतिमंत्रस्यवामदेवऋषिः राहुर्देवता गायत्रीछंदः राहुप्रीतयेतिलधान्याज्यदूर्वासमिद्धोमेविनियोगः ॥ ॐ कयानश्चित्रआभूवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ राहवेस्वाहाइदंराहवे ॥ ८ ॥ केतुंकृण्वन्नितिमंत्रस्य मधुश्छंदाऋषिः केतुर्देवता गायत्रीछंदः केतुप्रीतयेतिलधान्याज्यकुशसमिद्धोमेविनियोगः ॥ ॐ केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुषद्भिरजायथाः ॥ केतवेस्वाहा इदंकेतवे ॥ ९ ॥ अन्याश्चतिलाहुतयः ॥ ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ आसादयादिहस्वाहा ॥ ॥ १ ॥ ॐअप्प्स्वग्नेसधिष्ठवसौषधीरनुरुध्यसे ॥ गर्भेसंजायसेपुनः स्वाहा ॥ २ ॥ स्यो

नापृथिवीनोभवानृक्षरानिवेशनी॥ यच्छानःशर्मसप्रथाःस्वाहा ॥ ३ ॥ इदंविष्णुचर्विक्रमे
त्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरेस्वाहा ॥ ४ ॥ महाँ२ इंद्रोवज्रहस्तः षोड
शीशर्मयच्छतु॥ हंतुपाप्मानंयोस्मान्द्वेष्टिस्वाहा ॥ ५ ॥ शुक्रज्योतिश्चचित्रज्योतिश्च
सत्यज्ज्योतिश्चज्योतिष्मांश्चशुक्रश्चऋतपाश्चात्यꣳहाः स्वाहा ॥ ६ ॥ प्रजापतेनत्वदे
तान्न्यन्योविश्वारूपाणिपरिताबभूव॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयꣳस्यामपत
योरयीणांस्वाहा ॥ ७ ॥ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः ॥ पितरंचप्रयंत्स्वः
स्वाहा॥ ८॥ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोवेनआवः॥ सबुध्न्याउपमाअ
स्यविष्ठाःसतश्चयोनिमसतश्चविवः स्वाहा॥ ९ ॥ ॥ अथाधिदेवानांमंत्राः ॥ ॐत्र्यं
बकंयजामहेसुगंधिंपुष्टिवर्द्धनम्॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥१॥ ॐ
रुद्रायस्वहाइदंरुद्राय ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौ

व्यात्तम् ॥ इष्णन्निषाणामुम्मइषाणसर्वलोकम्मऽइषाण ॥ २ ॥ ओंश्रियैस्वाहाइदं० ॥
यदक्रंदः प्रथमंजायमानऽउद्यँत्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउप
स्तुत्यंमहिजातंतेअर्वन्॥३॥ ॐस्कँदायस्वाहाइदं०॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपद
म् ॥ समूढमस्यपाᳫंसुरे ॥ ४ ॥ ॐविष्णवेस्वाहाइदं० ॥ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्वि
सीमतः सुरुचोवेनऽआवः ॥ सबुध्न्याउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः
॥ ५ ॥ ॐब्रह्मणेस्वाहाइदं० ॥ त्रातारमिंद्रमवितारमिंद्रᳫंहवेहवेसुहवᳫंशूरमिंद्रम् ॥
ह्वयामिशक्रंपुरुहूतमिंद्रᳫंस्वस्तिनोमघवाधात्विंद्रः ॥ ६ ॥ ॐइंद्रायस्वाहाइदं० ॥
यमायत्वामखायत्वासूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याः ॥ सᳫंस्पृ
शस्पाहि अर्चिरसिशोचिरसितपोसि ॥ ७ ॥ ॐयमायस्वाहाइदं० ॥ कार्षिरसि
समुद्रस्यत्वाक्षित्याऽउन्नयामिसमापो अद्भिरग्मतसमोषधीभिरोषधीः ॥ ८ ॥ ॐ

कालायस्वाहाइदं० ॥ ॐचित्रावसोस्वस्तितेपारमसीय ॥ १ ॥ ॐचित्रगुप्तायस्वाहा इदं० ॥ ॥अथप्रत्यधिदेवानांमंत्राः ॥सनःपितेवसूनवेग्नेसूपायनोभव॥ सचस्वानःस्व स्तये ॥ १ ॥ ॐअग्नयेस्वाहाइदं० ॥ आपोअद्यान्वचारिषर्ठंरसेनसमसृक्ष्महि ॥ पय स्वानग्नआगमंतम्मासर्ठंसृजवर्चसाप्रजयाचधनेनच ॥ १ ॥ ॐअद्भ्यःस्वाहाइदं० ॥ चिदसितयादेवतयांगिरस्वध्रुवासीद ॥ परिचिदसितयादेवतयांगिरस्वध्रुवासीद ॥ १ ॥ ॐपृथिव्यैस्वाहाइदं०॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपार्ठंसुरे ॥१॥ ॐविष्णवेस्वाहाइदं० ॥ इंद्रऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञःपुरऽएतुसोमः॥ देवसेना नामभिभंजतीनांजयंतीनांमरुतोयंत्वग्रम् ॥ १ ॥ ॐइंद्रायस्वाहाइदं० ॥ इंद्रदैवीर्विशो मरुतोनुवर्त्मानोभवन्यथेंद्रंदैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥ एवमिमंयजमानंदैवी श्चविशोमानुषीश्चानुवर्त्मानोभवंतु ॥ १ ॥ ॐइंद्राण्यैस्वाहाइदं० ॥ प्रजापतेनत्वदेता

न्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तु वयᳫँस्यामपत
योरयीणाम् ॥ १ ॥ ॐप्रजापतयेस्वाहाइदं० ॥ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ ये
ऽअंतरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः ॥ १ ॥ ॐ सर्पेभ्यः स्वाहाइदं० ॥ ब्रह्मजज्ञानंप्र
थमंपुरस्ताद्विसीमतः सुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाः सतश्चयोनिमस
तश्चविवः ॥ १ ॥ ॐब्रह्मणेस्वाहाइदं० ॥ अथगणपंचकमंत्राः॥ ॐगणानांत्वा० ॥१॥
ॐगणपतयेस्वाहाइदं० ॥ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनः
परिषदतिदुर्गाणिविश्वानावेवासिंधुंदुरितात्यग्निः ॥ १ ॥ ॐदुर्गायैस्वाहाइदं० ॥ वा
योयेतेसहस्त्रिणोरथाशस्तेभिरागहि॥ नियुत्वांत्सोमपीतये॥ १ ॥ ॐवायवेस्वाहाइदं०॥
घृतंघृतपावानः पिबतवसांवसापावानः पिबतांतरिक्षस्यहविरसिस्वाहा ॥ दिशः
प्रदिशऽआदिशोविदिशउद्दिशोदिग्भ्यः स्वाहा ॥ १ ॥ ॐअन्तरिक्षायस्वाहाइदं०॥ या

वांकशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञंमिमिक्षतांपिप्रतान्नोभरीमभिः ॥ १ ॥
ॐअश्विभ्यांस्वाहाइदं० ॥ अथनक्षत्राणांमंत्राः ॥ अश्विनातेजसाचक्षुः प्राणेनसर
स्वतीवीर्य्यम्॥ वाचेंद्रोबलेनेंद्रायदधुरिंद्रियम् ॥ १ ॥ ॐदस्राभ्यस्वाहाइदं०॥यमायत्वा
मखायत्वा सूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याः ॥ सꣳस्पृशस्पाहि
अर्चिरसिशोचिरसितपोसि ॥ १ ॥ ॐभरण्यैस्वाहाइदं० ॥ अयमग्निःसहस्रिणोवा
जस्यशतिनिस्पतिः ॥ मूर्द्धाकवीरयीणाम् ॥ १ ॥ ॐकृत्तिकाभ्यःस्वाहाइदं० ॥ ब्रह्मज
ज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याउपमाअस्यविष्ठाः सतश्च
योनिमसतश्चविवः ॥ १ ॥ ॐरोहिण्यैस्वाहाइदंरो०॥ सोमोधेनुꣳसोमोअर्वंतमाशुꣳ
सोमोवीरंकर्मण्यंददाति ॥ सादन्यंविदथ्यꣳसभेयंपितृश्रवणंयोददाशदस्मै ॥१॥ ॐमृ
गशिरसेस्वाहाइदं० ॥ ॐनमस्तेरुद्रमन्यवउतोतइषवेनमः॥बाहुभ्यामुततेनमः ॥ ॐआ

द्र्यैस्वाहाइदं० ॥ अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपितासपुत्रः ॥ विश्वेदेवाअ
दितिःपंचजनाअदितिर्जातमदितिर्जनित्वम् ॥ १ ॥ ॐआदितेयायस्वाहा इदं० ॥ वा
चस्पतयेपवस्ववृष्णोअᳬंशुभ्यांगभस्तिपूतः ॥ देवोदेवेभ्यःपवस्व येषांभागोसि ॥
॥ १ ॥ ॐपुष्यायस्वाहाइदं० ॥ ॐनमोस्तुसर्पेभ्योयेकेचपृथिवीमनु॥ येअंतरिक्षेयेदि
वितेभ्यःसर्पेभ्योनमः ॥ १ ॥ ॐआश्लेषायैस्वाहा इदं० ॥ पितृभ्यःस्वधायिभ्यः स्व
धानमः पितामहेभ्यःस्वधायिभ्यःस्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा
नमः अक्षन्नपितरोमीमदंतपितरोतीतृपंतपितरःपितरःशुन्धध्वम् ॥ १ ॥ ॐमघा
यैस्वाहाइदं० ॥ भगप्रणेतर्भगसत्यराधोभगेमांधियमुदवाददन्नः ॥ भगप्रणोजनयगो
भिरश्वैर्भगप्रनृभिर्नृवंतःस्याम ॥ १ ॥ ॐपूर्वाफाल्गुन्यैस्वाहाइदं० ॥ दैव्यावध्वर्यू
आगतᳬंरथेनसूर्यत्वचामध्वायज्ञᳬंसमंजाथे ॥ तम्प्रक्तनथायंवेनश्चित्रन्देवानाम् ॥ १ ॥

ॐ उत्तराफाल्गुन्यैस्वाहा इदं० ॥ विभ्राड्बृहत्पिबतुसोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ॥ वातजूतोयोअभिरक्षतित्मनाप्रजाः पुपोषपुरुधविराजति ॥ १ ॥ हस्तायस्वाहाइदं०॥त्वष्टातुरीयोअद्भुतइंद्राग्नीपुष्टिवर्धना॥द्विपदाछंदऽइंद्रियमुक्षागौर्न्नवयोदधुः ॥ ॐत्वष्ट्रेस्वाहाइदं० ॥ पीवोअन्नांरयिवृधःसुमेधःश्वेतःसिषक्तिनियुतामभिश्रीः ॥ तेंवायवेसुमनसोवितस्थुर्विश्वेन्नरः स्वपत्यानिचक्रुः॥१॥ ॐवायव्यायस्वाहाइदं०॥इंद्राग्नीआगतꣳसुतंगीर्भिर्न्नभोवरेण्यम्॥ अस्यपातंधियेषिता ॥१॥ ॐविशाखायैस्वाहाइदं०॥ नमोमित्रस्यवरुणस्यचक्षसेमहोदेवायतदृतꣳसपर्यत॥ दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशꣳसत ॥ १ ॥ ॐअनुराधायै स्वाहाइदं० ॥ सइषुहस्तैः सनिषंगिभिर्वशीसꣳस्रष्टासयुधइंद्रोगणेन॥सꣳसृष्टजित्सोमपाबाहुशर्द्ध्यूर्ग्रधन्वाप्रतिहिताभिरस्ता॥१॥ॐज्येष्ठायैस्वाहाइदं०॥मातेवपुत्रंपृथिवीपुरीष्यमग्निꣳस्वेयोनावभारुषातां॥

 

विश्वेदेवैर्ऋतुभिः सम्विदानः प्रजापतिर्विश्वकर्माविमुंचतु॥ ॐमूलायस्वाहाइदं० ॥ १ ॥ अपाघमपकिल्बिषमपकृत्यामपोरपः॥अपामार्गत्वमस्मदपदुःष्वप्न्यर्ठंसुव ॥१॥ ॐपूर्वाषाढायैस्वाहाइदं०॥ विश्वेऽअद्यमरुतोविश्वऽऊतीर्विश्वेभवंत्वग्नयः समिद्धाः॥ विश्वेनोदेवाअवसागमंतुविश्वमस्तुद्रविणंवाजोऽअस्मे ॥ १ ॥ ॐउत्तराषाढायैस्वाहा इदं० ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥ धियोयोनः प्रचोदयात् ॥ १ ॥ ॐअभिजितेस्वाहाइदं० ॥ इदंविष्णुर्वि० ॥ १ ॥ ॐश्रवणायस्वाइदं०॥ वसोः पवित्रमसिशतधारंवसोः पवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेण शतधारेणसुप्प्वाकामधुक्षः ॥१॥ ॐधनिष्ठायैस्वाहाइदं०॥ वरुणोस्योत्तंभनमसि०॥१॥ॐशतभिषायैस्वाहाइदं० ॥ उतनोहिर्बुध्न्यः शृणोत्वजएकपात्पृथिवीसमुद्रः॥ विश्वेदेवाऋतावृधोहुवानास्तुतामंत्राः कविशस्ताऽअवंतु ॥ १ ॥ ॐपूर्वाभाद्रपदायैस्वाहाइदं० ॥

शिवोनामासिस्वधितिस्तेपितानमस्तेअस्तुमामाहिर्ठंसीः ॥ निवर्तयाम्यायुषेन्नाद्याय
प्रजननायरायस्पोषायसुप्रजास्त्वायसुवीर्य्याय॥१॥ ॐउत्तराभाद्रपदायैस्वाहाइदं० ॥
पूषन्तवतेव्वयन्नरिष्येमकदाचनस्तोतारस्तइहस्मसि ॥ १ ॥ ॐरेवत्यैस्वाहाइदं० ॥
अथयोगानांमंत्रः॥योगेयोगेतवस्तरंवाजेवाजेहवामहे॥सखायइंद्रमूतये॥१॥ योगेभ्यः
स्वाहाइदं०॥अथकरणनांमंत्रः॥भद्रंकर्णेभिः शृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः॥
स्थिरैरंगैस्तुष्टुवाठंसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ १॥ ॐरकणेभ्यः स्वाहा
इदं० ॥ ध्रुवासिध्रुवोयंयजमानोस्मिन्नायतनेप्रजयापशुभिर्भूयात् ॥ घृतेनद्यावापृथि
वीपूर्यैथामिंद्रस्यच्छदिरसिव्विश्वजनस्यछाया॥ १ ॥ ॐध्रुवायस्वाहाइदं० ॥ पंचनद्यः
सरस्वतीमपियंतिसस्त्रोतसः ॥ सरस्वतीतुपंचधासोदेशेभवत्सरित् ॥ १ ॥ ॐनदी
भ्यः वाहाइदं०॥ सप्तऋषयः प्रतिहिताः शरीरेसप्तरक्षंतिसदमप्रमादम् ॥ सप्तायः

स्वपतोलोकमीयुस्तत्रजाग्रतोअस्वप्नजौसत्रसदौचदेवौ ॥ १ ॥ ॐसप्तऋषिभ्यः
स्वाहाइदं० ॥इमंमेवरुणश्रुधीहवमद्याचमृडय॥त्वामवस्युराचके ॥ १ ॥ ॐसप्तसागरे
भ्यः स्वाहाइदं० ॥ प्रपर्वतस्यवृषभस्यपृष्ठान्नावश्चरंतिस्वसिचऽइयानाः ॥ ताऽआववृ
त्रन्नधरागुदक्ताअहिर्बुध्न्यमनुरीयमाणाः ॥ विष्णोर्विक्रमणमसिविष्णोर्विक्रांतमसिवि
ष्णोः क्रांतमसि ॥ १ ॥ ॐपर्वतेभ्यः स्वाहाइदं० ॥ जवोवस्तेवाजिन्निहितोगुहायः
श्येनेपरीतोऽअचरच्चवाते ॥ तेननोवाजिन्बलवान्बलेनवाजजिच्चभवशमनेचपारयि
ष्णुः ॥ १ ॥ ॐरैवंतायस्वाहाइदं० ॥ सुपर्णोसिगरुत्मांस्त्रिवृतेशिरोगायत्रंचक्षुर्बृहद्र
थंतरेपक्षौस्तोमआत्माछंदाᳫंस्यंगानियजूᳫंषिनाम सामतेतनूर्वामदेव्यंयज्ञायज्ञि
यंपुच्छंधिष्ण्याःशफाःसुपर्णोसिगरुत्मांदिवंगच्छस्वःपतः ॥ १ ॥ ॐगरुडायस्वा
हाइदं० ॥ असंख्याताःसहस्राणियेरुद्राऽअधिभूम्याम् ॥ तेषाᳫंसहस्रयोजनेवधन्वा

नितन्मासि ॥ १ ॥ ॐरुद्रायस्वाहाइदं० ॥ ॐसहस्रशीर्षापुरुष० ॥ १ ॥ ॐविष्ण
वेस्वाहाइदं० ॥ ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहे
प्रतितन्नोजुषस्वशन्नोअस्तुद्विपदेशंचतुष्पदे ॥ १ ॥ अमीवहावास्तोष्पतेविश्वारूपा
ण्याविशन् ॥ सखासुशेवऽएधिनः ॥ २ ॥ ॐवास्तवेस्वाहाइदं०॥ गणानांत्वा० ॥ ॐग
णपतयेस्वाहाइदं० ॥ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येअंतरिक्षेयेदिवितेभ्यःसर्पे
भ्योनमः ॥ १ ॥ ॐक्षेत्रपालायस्वाहाइदं० ॥ जातवेदसेसुनवामसोममरातीयतोनि
दहातिवेदः ॥ सनः परिषदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ १ ॥ ॐचा
मुंडायैस्वाहाइदं० ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः॥ ॐगौ
र्यादिमातृभ्यःस्वाहाइदं० ॥ ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्न
धातमम् ॥ १ ॥ ऋग्वेदायस्वाहाइदं०॥ इषेत्वोर्जेत्वावायवस्थदेवोवःसवितापार्पयतुश्रे

ष्ठतमायकर्मणऽआप्यायध्वमघ्न्याऽइंद्रायभागंप्रजावतीरनमीवाअयक्ष्मा ॥ मावस्ते
नईशतमाघशर्ठंसोध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥ ॐय
जुर्वेदायस्वाहाइदं० ॥ अग्नआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि
॥१॥ ॐसामवेदायस्वाहाइदं०॥ शन्नोदेवीरभिष्टयऽआपोभवंतुपीतये॥ शंय्योरभिस्रवं
तुनः॥१॥ ॐअथर्ववेदायस्वाहाइदं०॥ त्रातारमिंद्रमवितारमिंद्रर्ठंहवेहवेसुहवर्ठंशूरमिं
द्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रर्ठंस्वस्तिनोमघवाधात्विंद्रः ॥ १ ॥ ॐइंद्रायस्वाहा
इदं० ॥ त्वन्नोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य॥त्रातातोकस्यतनयेगवामस्यनि
मेषर्ठंरक्षमाणस्तवव्रते ॥ १ ॥ ॐअग्नयेस्वाहाइदं० ॥ सुगंनुपंथांप्रदिशन्नऽएहिज्यो
तिष्मध्येह्यजरन्नआयुः॥अपैतुमृत्युरमृतंमआगाद्वैवस्वतोनोअभयंकृणोतुस्वाहा।१।
ॐयमायस्वाहाइदं०॥ असुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य॥ अ

न्यमस्मादिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ १ ॥ ॐनैर्ऋत्यायस्वाहाइदं० ॥
तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयममानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरु
शर्ठ्ँसमानआयुःप्रमोषीः ॥ १ ॥ ॐवरुणायस्वाहाइदं० ॥ आनोनियुद्भिः शतिनी
भिरध्वरर्ठ्ँसहस्त्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयंपातस्व
स्तिभिःसदानः ॥ १ ॥ ॐवायवेस्वाहाइदं०॥ वयर्ठ्ँसोमव्रतेतवमनस्तनूषुबिभ्रतः॥ प्र
जावंतःसचेमहि ॥ १ ॥ ॐधनदायस्वाहाइदं० ॥ तमीशानंजगतस्तस्थुषस्पतिंधियं
जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ १ ॥
ॐईशानायस्वाहाइदं० ॥ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्यैभरहूतौसजोषाः ॥ यःश
र्ठ्ँसतेस्तुवतेधायिपज्रऽइंद्रज्येष्ठाऽअस्मां२ँ अवंतुदेवाः ॥ १ ॥ ॐअंतरिक्षाय
स्वाहाइदं० ॥ स्योनापृथिवीनोभवान्नृक्षरानिवेशनी॥यच्छानः शर्मसप्रथाः ॥ १ ॥ ॐ

धरायैस्वाहाइदं० ॥ ॐचतुःषष्टियोगिनीभ्यः स्वाहाइदं० ॥ अथवाप्रणवादिनमोंतचतु
र्थ्यंतनामभिर्वाहोमः ॥ ॐभूतायित्वानारातयेस्वरभिविख्येस्वंदृर्ठंहंतांदुर्याः ॥ पृथि
व्यामुर्वंतरिक्षमन्वेमिपृथिव्यास्त्वानाभौसादयाम्यादित्याउपस्थेग्रेहव्यर्ठंरक्ष ॥ १ ॥
ॐपंचभूतेभ्यः स्वाहा इदं० ॥ विश्वकर्मन्हविषावर्द्धनेनत्रातारमिंद्रमकृणोरवध्यम् ॥
तस्मैविशः समनमंतपूर्वीहयमुग्रोविहव्योयथासत ॥ १ ॥ ॐविश्वकर्मणेस्वाहा इ
दं० ॥ ततोयथासंख्यंप्रधानमंत्रेणजुहुयात् ॥ ततोलक्ष्मीहोमः ॥ तंडुलाज्यशर्करापंचा
मृतद्रव्येण ॥ ॐश्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥
इष्णन्निषाणामुम्मइषाणसर्वलोकम्मइषाण ॥ मनसः काममाकूतिंवाचः सत्यमशीम
हि ॥ पशूनां ९रूपमन्नस्यमयिश्रीः श्रयतांयशः स्वाहा ॥ १ ॥ श्रीसूक्तेनचरुहोमः ॥
ॐहिरण्यवर्णांहरिणींसुवर्णरजतस्रजाम् ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावहस्वा

हा ॥ १ ॥ तांमआवहजातवेदोलक्ष्मीमलपगामिनीम् ॥ यस्यांहिरण्यंविंदेयंगामश्वं
पुरुषानहं ॥ २ ॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीम् ॥ श्रियंदेवीमुपह्वयेश्रीर्मा
देवीर्जुषतां ॥ ३ ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीम् ॥ पद्मेस्थि
तांपद्मवर्णांतामिहोपह्वयेश्रियम् ॥ ४ ॥ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजु
ष्टामुदाराम् ॥ तांपद्मनेमिंशरणमहंप्रपद्येअलक्ष्मीर्मेनश्यतांत्वावृणोमि ॥ ५ ॥ आ
दित्यवर्णेतपसोधिजातो वनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानि तपसानुदंतुमा
यान्तरायाश्चबाह्याअलक्ष्मीः ॥ ६ ॥ उपैतुमांदेवसखः कीर्तिश्चमणिनासह ॥
प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥ ७ ॥ क्षुत्पिपासामलाज्येष्ठाअलक्ष्मीर्ना
शयाम्यहं ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ॥ ८ ॥ गंधद्वारांदुराधर्षांनित्य
पुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ ९ ॥ मनसः काममाकूतिंवा

चःसत्यमशीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ॥ १० ॥ कर्दमेनप्र जाभूतामयिसंभवकर्दमः ॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीम् ॥ ११ ॥ आपः स्रजंतुस्निग्धानिचिक्लीतवसमेगृहे ॥ नीचदेवींमातरंश्रियंवासयमेकुले ॥ १२ ॥ आ र्द्रांयष्करिणींयष्टिंसुवर्णांहेममालिनीं ॥ सूर्यांहिरण्मयींलक्ष्मींजातवेदोममावह॥ १३ ॥ आर्द्रांपुष्करिणीपुष्टिंपिंगलांपद्ममालिनीम् ॥ सूर्यांहिरण्मयींलक्ष्मींजातवेदोममाव हा ॥ १४ ॥ तांमआवहजातवेदोलक्ष्मीमलपगामिनीम् ॥ यस्यांहिरण्यंप्रभूतंगावो दास्योश्वान्विंदेयंपुरुषानहं ॥ १५ ॥ ततः सर्वेभ्योहविर्भ्यः स्विष्टकृद्धोमः ॥ ॐअ ग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृतेनमम ॥ ततोनवाज्याहुतयः ॐभूः स्वाहा इदमग्नये ॥ १ ॥ ॐभुवः स्वाहा इदंवायवे ॥ २ ॥ ॐस्वःस्वाहा इदंसूर्याय ॥ ३ ॥ ॐ त्वन्नोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः ॥ यजिष्ठोवह्नित

मः शोशुचानोविश्वाद्वेषाᳬंसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ ४ ॥ इदमग्नीवरुणाभ्याम् ॥
ॐ सत्वन्नोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणᳬंरराणो
वीहिमृडीकᳬंसुहवोनऽएधिस्वाहा ॥ ५ ॥ इदमग्नीवरुणाभ्याम् ॥ ॐअयाश्चाग्नेस्य
नभिशस्तीपाश्चसत्यमित्वमयाऽअसि ॥ अयानोयज्ञंवहास्ययानोधेहिभेषजᳬंस्वा
हा ॥ ६ ॥ इदमग्निभेषजाय ॥ ॐयेतेशतंवरुणंयेसहस्रंयज्ञियाःपाशावितताम
हांतः ॥ तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतः स्वर्काः स्वाहा ॥ ७ ॥ इदं
वरुणायसवित्रेविष्णवेविश्वेभ्योमरुद्भ्यः स्वर्केभ्यः ॥ ॐ उदुत्तमंवरुणपाशमस्म
दवाधमंविमध्यमᳬंश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोऽअदियेस्याम
स्वाहा ॥ ८ ॥ इदंवरुणाय ॥ ॐप्रजापतयेस्वाहा इदंप्रजापतये ॥ ९ ॥ होमांते
ग्रहपूजनंकर्त्तव्यं॥ ततोदिग्पालपूजनंबलिदानंच॥ माषभक्तदधिशष्कुलीदीपसाहितेनब

लिनापूजयेत् ॥ अथबलिदानमंत्राः ॥ अहोइंद्रगजेंद्रस्थवज्रहस्तप्रपूजितः ॥ त्राता
रमिंद्रमंत्रेणप्राचींरिक्षतुदिक्पते ॥ १ ॥ ॐत्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुह
वꣳशूरमिंद्रम् ॥ ह्वयामिशक्रंपुरुहूतमिंद्रꣳस्वस्तिनोमघवाधात्विंद्रः ॥ २ ॥ पूर्वे
इंद्रायनमः इंद्रस्यानुचरेभ्योनमः भोइंद्रदिशंरक्षबलिंभक्षयजमानस्याभ्युदयंकुरु ॥ यज
मानस्यायुःकर्त्ताशांतिकर्त्तापुष्टिकर्तातुष्टिकर्त्तावरदोभव ॥ १ ॥ अहोसप्तार्चिमे
षस्थहव्यवाहनपूजितः ॥ त्वन्नोअग्नेतिमंत्रेणरक्षाग्नेयांदिशांपते ॥ १ ॥ ॐत्वन्नो
अग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोवि
श्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ २ ॥ आग्नेयामग्नयेनमः अग्नेरनुचरेभ्योनमः दिशं०
॥२॥ अहोमहिषमारूढदंडपाणेवरप्रद ॥ पूज्यःसुगन्नुपंथेतिदक्षिणादिक्प्रपालकः ॥ १ ॥
ॐसुगन्नुपंथांप्रदिशन्नएहिज्योतिष्मद्धेह्यजरन्नआयुः ॥ अपैतुमृत्युरमृतंमआगाद्वै

वस्वतोनोअभयंकृणोतुस्वाहा ॥ २ ॥ दाक्षणेयमायनमः यमस्यानुचरेभ्योनमः दि
शं० ॥३॥ अहोनैर्ऋतिदिक्पालनैर्ऋत्यांखड्ग धारकः ॥ आगच्छकौशिकारूढअसुन्वन्ते
तिपूजितः ॥१॥ ॐअसुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यम
स्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ २ ॥ नैर्ऋत्यांनिर्ऋतयेनमः निर्ऋ
तेरनुचरेभ्योनमः दिशंरक्ष० ॥ ४ ॥ अहोवरुणदिक्पालवारुण्यांमकरेस्थितः ॥ अर्चि
तः पाशहस्तश्चतत्त्वायामीतिमंत्रतः ॥ १ ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशा
स्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोद्ध्युरुशꣳसमानआयुःप्रमोषीः ॥ २ ॥
पश्चिमेवरुणायनमः वरुणस्यानुचरेभ्योनमः दिशंरक्ष० ॥ ५ ॥ अहोवायव्यदिक्पा
लमृगपृष्ठंसमाश्रितः ॥ आनोनियुद्भिर्मंत्रेणवायव्यांरक्षपूजितः ॥ १ ॥ आनोनियुद्भिःश
तिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोअस्मिन्त्सवनेमादयस्वयूयंपा

तस्वस्तिभिःसदानः ॥ २ ॥ वायव्यांवायवेनमः वायोरनुचरेभ्योनमः दिशं० ॥ ६ ॥ अहोनरविमानस्थगदापाणेवरप्रद ॥ उत्तरांहिदिशंरक्षवयंसोमेतिपूजितः ॥ १ ॥ ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेमहि ॥ २ ॥ उत्तरेकुबेरायनमः कुबेरस्यानुचरेभ्योनमः दिशं० ॥ ७ ॥ अहोवृषभमारूढशूलपाणेवरप्रद ॥ रुद्राशांपूजितोरक्षतमीशानेतिमंत्रतः ॥ १ ॥ ॐतमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ २ ॥ ईशान्यामीशानायनमः ईशानस्यानुचरेभ्योनमः दिशंरक्ष० ॥ ८ ॥ अहोहंसस्थितोब्रह्मन्व्योमरक्षतुदिक्पते ॥ कमंडलुधरः साक्षीअस्मेरुद्रेतिपूजितः ॥ १ ॥ ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यः शꣳसतेस्तुवतेधायिपज्रऽइंद्रज्येष्ठाअस्माँअवंतुदेवाः ॥ २ ॥ ॐऊर्ध्वंब्रह्मणेनमः ब्रह्मणोनुचरेभ्योनमः दिशं० ॥ ९ ॥ अहोगरु

डमारूढशंखचक्रगदाधर ॥ पालयाधोदिशंविष्णोस्योनाप्टथ्वीतिमंत्रतः ॥ १ ॥ ॐस्यो
नाप्टथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्मसप्रथाः ॥ २ ॥ अधः अनंतायनमः
अनंतस्यानुचेरभ्योनमः दिशंरक्ष० ॥ १० ॥ ततस्तैलपूरितचतुर्वर्तिप्रज्वलितदीपक
सहितांमाषभक्तदधिशष्कुलावलिं शूर्पेपात्रेकृत्वा नैर्ऋतिंदिशंगत्वा ॥ ॐ हिंकाराय
स्वाहा हिंकृतायस्वाहा क्रंदतेस्वाहावक्रंदायस्वाहा प्रोथतेस्वाहा प्रप्रोथायस्वाहा
गंधायस्वाहा घ्रातायस्वाहा निविष्टायस्वाहोपविष्टायस्वाहा संदितायस्वाहा वलते
स्वाहाऽऽसीनायस्वाहा शयानायस्वाहा स्वपतेस्वाहास्वपतेस्वाहा जाग्रतेस्वाहा कू
जतेस्वाहाप्रबुद्धायस्वाहा विजृंभमाणायस्वाहा विचृत्तायस्वाहा सर्ठंहानायस्वाहोप
स्थितायस्वाहाऽयनायस्वाहा प्रायणायस्वाहा ॥ १ ॥ यत्तेस्वाहा धावतेस्वाहोद्रावायस्वा
हो द्रुतायस्वाहा शूकरायस्वाहा शूकृतायस्वाहा निषण्णायस्वाहोत्थितायस्वाहा जवा

यस्वाहा बलायस्वाहा विवर्त्तमानायस्वाहा विवृत्तायस्वाहा विधुन्वानायस्वाहा विधू
तायस्वाहा शुश्रूषमाणायस्वाहा शृण्वतेस्वाहेक्षमाणायस्वाहेक्षितायस्वाहा वीक्षि
तायस्वाहा निमेषायस्वाहा यदत्तितस्मैस्वाहा यत्पिबतितस्मैस्वाहा यन्मूत्रंकरोति
तस्मैस्वाहा कुर्वतेस्वाहा कृतायस्वाहा ॥ २ ॥ कौलीरेचित्रकूटेहिमगिरिशिखरेकांत
जालंधरेवा सौराष्ट्रेसिंधुदेशेमगधपुरवरेकौसलेवाकलिंगे ॥ कर्णाटेकौंकणेवाभृगुपुपु
रवरेकान्यकुब्जेस्थितावातेसर्वेयज्ञरक्षाकरणकृतधियःपांतुवःक्षेत्रपालाः ॥ १ ॥ द्वाभ्यां
मंत्राभ्यांक्षेत्राधीशायनमःक्षेत्राधीशस्यानुचरेभ्योनमः दिशं० ॥ २ ॥ स्वपादौप्रक्षाल्या
चम्य द्यौःशांतिरंतारिक्षꣳशांतिः पृथिवीशांतिरापः शांतिरोषधयः शांतिर्वनस्पतयः
शांतिर्विश्वेदेवाः शांतिर्ब्रह्म शांतिः सर्वꣳशांतिः शांतिरेवशांतिः सामाशांतिरेधिद्वि
पदचतुष्पदेभ्यः शांतिरस्तु ॥ १ ॥ इतिशांतिंकुर्यात् ॥ ततःपूर्णाहुतिंजुहुयात् ॥ आ

ज्यस्थाल्यामाज्यनिर्वापः ॥ आज्याधिश्रयणंस्रुक्स्रुवौप्रताप्यसंमृज्यअभ्युक्ष्यपुनः
प्रतप्यनिदध्यात् ॥ ततः आज्यमुद्वास्यउत्पूयअवेक्ष्यअपद्रव्यनिरसनंस्रुचिरादाय
चतुर्गृहीतमाज्यंकृत्वा स्रुवैश्चतुर्भिर्गृहीतंपूरयित्वानालिकेरंचघृतेनपूरयित्वाकुंकुमेनपू
जयित्वाकौसुंभवस्त्रेणवेष्टयित्वा सूत्रेणचवेष्टयित्वास्रुचौधृत्वा तस्योपरिपूगीफलंचधृ
त्वा नालिकेरस्यमुखमात्मनः सन्मुखंकृत्वाविवाहे अग्निसन्मुखंकृत्वाजुहुयात्॥ पूर्णा
हुत्यांमृडनाम्नेवैश्वानरायइदंगंधपुष्पंधूपंदीपंनैवेद्यं आचमनम् ॥ एकोनपंचाशन्मरुद्ग
णेभ्योनमः गंधं पुष्पं धूपं दीपं नैवेद्यं आचमनम् ॥ ततस्तांस्रुचिंगृहीत्वोत्थायघृतेनावि
च्छिन्नधारयाग्नौपातयेत् ॥ मूर्द्धानमितिभारद्वाजऋषिः वैश्वानरोदेवता त्रिष्टुप्छंदः
पूर्णाहुतिहोमेविनियोगः ॥ ॐमूर्द्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निम् ॥
कविंसंम्राजमतिथिं जनानामासन्नापात्रं जनयंतदेवाः ॥ १ ॥ पूर्णादर्विपरापतसु

पूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्जंᳫंशतक्रतो ॥ २ ॥ चित्तिंजुहोमिमनसा
घृतेनयथादेवाइहागमन्वीतिहोत्राऽऋतावृधः ॥ पत्येविश्वस्यभूमनोजुहोमि विश्वक
र्मणेविश्वाहादाभ्यᳫंहविः ॥ ३ ॥ सप्ततेअग्नेसमिधःसप्तजिह्वाः सप्तऋषयः स
प्तधामप्रियाणि ॥ सप्तहोत्राः सप्तधात्वायजंतिसप्तयोनीरापृणस्वघृतेनस्वाहा ॥ ४ ॥
शुक्रज्योतिश्चचित्रज्योतिश्चसत्यज्योतिश्च ज्योतिष्मांश्चशुक्रश्चऋतपाश्चात्यᳫंहाः ॥
॥ ५ ॥ ईदृङ्चान्यादृङ्चसदृङ्चप्रतिसदृङ्चसम्मितश्चसभराः ॥ ६ ॥ ऋतश्चस
त्यश्चध्रुवश्चवरुणश्चधर्त्ताचविधर्त्ताचविधारयः ॥ ७ ॥ ऋतजिच्चसत्यजिच्चसेनजिच्चसु
षेणश्चअंतिमित्रश्चदूरेअमित्रश्चगणः ॥ ८ ॥ ईदृक्षासऽएतादृक्षासऽऊषुणः सदृक्षसः
प्रतिसदृक्षासऽएतन ॥ मितासश्चसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥ ९ ॥
स्वतवांश्चप्रघासीचसांतपनश्चगृहमेधीच ॥ क्रीडीचसाकीचोज्जेषी ॥ १० ॥ उग्रश्च

भीमश्चध्वांतश्चधुनिश्च॥ सासह्वांश्चाभियुग्वाचविक्षिपः स्वाहा ॥ ११ ॥पुनस्त्वादित्या रुद्रावसवः समिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतन्वंवर्द्धयस्वसत्याः संतुय जमानस्यकामाः ॥ १२ ॥ इतिपठित्वा यजमानस्यकामाःसत्याःसंतु इतिश्रीफलंयज मानाभिमुखंजुहुयात्॥घृतंचरुद्रकलशेत्यागः॥इदमिंद्रायनमम॥पूर्णाहुतिंहुत्वोपविश्य स्रुवेणभस्मानीयदक्षिणकरानामिकयागृहीतभस्मना त्र्यायुषंकुर्यात् ॥ॐत्र्यायुषंजम दग्नेरितिललाटे ॥ ॐकश्यपस्यत्र्यायुषमितिग्रीवायाम् ॥ ॐयद्देवेषुत्र्यायुषमितिदक्षि णबाहुमूले॥ ॐतन्नोऽअस्तुत्र्यायुषमितिहृदि॥एवंत्र्यायुषंकुर्यात्॥परकर्तृकेतत्तेइतिवि शेषः ॥ ततोग्न्युपस्थानम्॥ ॐइंद्रंदैवीर्विशोमरुतोनुवर्त्मानोभवन्यथेंद्रंदैवीर्विशोमरुता नुवर्त्मानोभवन् ॥ एवमिमंयजमानंदैवीश्चविशोमानुषीश्चानुवर्त्मानोभवंतु ॥ १ ॥ इमᳬस्तनमूर्जस्वंतंधयापांप्रपीनमग्नेशरिरस्यमध्ये ॥ उत्संजुषस्वमधुमंतमर्वंत्स

मुद्रियर्ठंसदनमाविशस्व ॥ २ ॥ घृतंमिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतंवस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवाक्षिहव्यम् ॥ ३ ॥ समुद्रादूर्म्मिमर्म्मधुमाँउदारदुपाठंशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ ४ ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत् ॥ ५ ॥ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ २ ऽआविवेश ॥ ६ ॥ त्रिधाहितंपणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविंदन् ॥ इंद्रऽएकर्ठंसूर्य्यएकंयज्जजानवेनादेकर्ठंस्वधयानिष्टतक्षुः ॥ ७ ॥ एताऽअर्षंतिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराअभिचाकशीमिहिरण्ययोवेतसोमध्यआसाम् ॥ ८ ॥ सम्यक्स्रवंतिसरितोनधेनाऽअंतर्हृदामनसापूयमानाः ॥ एतेअर्षंत्यूर्मयोघृतस्यमृ

गाइवक्षिपणोरीषमाणाः ॥ ९ ॥ सिंधोरिवप्राध्वनेशूघनासोह्वातप्रमियः पतयंति यिह्वाः ॥ घृतस्यधाराअरुषोनव्वाजीकाष्ठाभिंदन्नूर्मिभिः पिन्वमानः ॥ १० ॥ अभिप्रवन्तसमनेवयोषाः कल्याण्यः स्मयमानासोअग्निम् ॥ घृतस्यधाराः समिधोनसंतताजुषाणोहर्य्यतिजातवेदाः ॥ ११ ॥ कन्याइवव्वहतुमेतवाउऽअंज्यंजनाअभिचाकशीमि ॥ यत्रसोमः सूयतेयत्रयज्ञोघृतस्यधाराअभितत्पवंते ॥ १२ ॥ अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञन्नयतदेवतानोघृतस्यधारामधुमत्पवंते ॥ १३ ॥ धामंतेविश्वंभुवनमाधिश्रितमंतः समुद्रेहृद्यंतरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्तमश्यामममधुमंतंतऽऊर्मिम् ॥ १४ ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यां पंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांतस्मैयज्ञात्मनेनमः ॥ १५ ॥ ज्ञानतोज्ञानतोवापि मंत्रकर्मक्रियाविधिः ॥ संपूर्णंकुरुयज्ञेशगार्हपत्यनमोस्तुते ॥ १६ ॥ यथाशस्त्रप्रहाराणां

कवचंभवतिवारणं ॥ तद्वद्देवापघातानांशांतिर्भवतिवारणम् ॥ १७ ॥ स्वस्तिश्रद्धांय
शः प्रज्ञांविद्यांबुद्धिंश्रियंबलम् ॥ आयुष्यंचैवमारोग्यंदेहिमेवांछितंफलम् ॥ १८ ॥ य
स्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतम् ॥
॥ १९ ॥ कायेनवाचामसेंद्रियैर्वाबुद्ध्यात्मनावानुसृतस्वभावात् ॥ करोमियद्यत्सकलं
परस्मैनारायणायेतिसमर्पयामि ॥ २० ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥
स्मरणादेवतद्विष्णोः संपूर्णस्यादितिश्रुतिः ॥ २१ ॥ ॐयज्ञपुरुषायनमः ॥ ततोहोम
संकल्पः ॥ ॐ तत्सदद्यमासेपक्षेतिथौअमुकगोत्रेणामुकशर्मणामयाआघारादिपूर्णा
हुतिपर्यंतंयद्यद्द्रव्यंयावद्यावत्संख्याकेन येनयेनमंत्रेणययाकामनयायस्यैयस्यैदेवता
यैहुतंसासादेवताप्रीयताम् ॥ तेदेवाः शांतिदापुष्टिदातुष्टिदावरदाभवंतु ॥ ग्रहजापके
भ्योग्रहतुष्ट्यैदानानिदेयानि ॥ ततःसंस्रवप्राशनं आचमनं ॥ ॐतत्सदद्यास्मिन्ग्रह

मखहवनकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थंन्यूनातिरिक्तदोषपरिहारार्थंच इ
दंपूर्णपात्रंसहिरण्यंप्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणायब्रह्मणेतुभ्यमहं
संप्रददे ॥ ॐ स्वस्तीतिप्रतिवचनं ॥ ततोब्रह्मग्रंथिविमोकः ॥ ततः ॐसुमित्रियान
आपओषधयःसंतु इतिपवित्राभ्यांप्रणीताजलमानीय तेनशिरःसम्मृज्य ॐ दुर्म्मि
त्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः ॥ इत्यैशान्यांप्रणीतान्युब्जीकरणंपवित्रे
अग्नौप्राक्षिपेत् ॥ ततःस्तरणक्रमेणबर्हिरुत्थाप्याज्येनाभिघार्य ॐ देवागातुविदोगा
तुवित्वागातुमित ॥ मनसस्यतइमंदेवयज्ञꣳस्वाहावातेधास्वाहा ॥ १ ॥ इतिमंत्रे
णबर्हिर्होमः ॥ ततो नमोब्रह्मणेनमोस्त्वग्नयेपृथिव्यैओषधीभ्योनमः॥ वाजेनमः वाचस्प
तयेनमः विष्णवेमहतेनमस्करोमि ॥ इतिमंत्रेणाग्निंत्रिःपर्युक्ष्य तज्जलेननेत्रस्पर्शनं॥
ततः शुक्लांबरधरःशुक्लमाल्यानुलेपनो यजमानः आचार्यादीन्गंधमाल्यादिभिरभ्य

न्र्याचार्यायब्रह्मणेऋत्विग्भ्यश्चवित्तानुसारेणदक्षिणांदद्यात् ॥ तत्रप्रयोगः ॥ ॐ तत्स
दद्यमासे पक्षे तिथौ वासरे अमुकगोत्रोमुकशर्मावर्मागुप्तोवाहं अस्यनवग्रहमखकर्म
णः सांगतासिद्ध्यर्थ अमुकगोत्रायामुकप्रवरायामुकवेदस्यामुकशाखाध्यायिनेऽमु
कशर्मणेब्राह्मणायाचार्यायइमांदक्षिणांतुभ्यमहंसंप्रददे ॥ इत्येवं ब्रह्मणेऋत्विग्भ्यश्च
दक्षिणांदद्यात् ॥ न्यूनातिरिक्तदोषपरिहारार्थंनवग्रहमखकर्मसांगतासिद्ध्यर्थं इदंपा
त्रंघृतपूरितंयथानामगोत्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजे ॥ एवंतंडुलतिलशर्करापा
त्राणिदद्यात् ॥ न्यूनातिरिक्तदोषपरिहारार्थंनवग्रहमखकर्मसांगतासिध्यर्थ यथानाम
गोत्रेभ्यो ब्राह्मणेभ्यो भूयसींदक्षिणांविभज्यदातुमुत्सृजे ॥ ततोयजमानः अन्यान
पिब्राह्मणान् वित्तानुसारेणगोभूहिरण्यमन्नरत्नानांदानादिभिः पूजयेत् ॥ ततोऽभिषेकः ॥
यजमानंसपत्नीकंसपुत्रंप्रागभिमुखमासीनं आचार्योऋत्विजश्चरुद्रकलशात्कुशदूर्वा

पल्लवैश्चोदकमानीयाभिषिंचेयुः ॥ ॐ आपोहिष्ठामयोभुवस्तानऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ १ ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ २ ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ ३ ॥ वरुणस्योत्तंभनमसि० ॥ ४ ॥ भगप्रणेतर्भगसत्यराधोभगेमांधियमुदवाददन्नः ॥ भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्नृवंतः स्याम ॥ ५ ॥ इदमापः प्रवहतावद्यंचमलंचयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेअभीरुणम् ॥ आपोमात्तस्मादेनसः पवमानश्चमुंचतु॥६॥समुद्रायत्वावातायस्वाहाशरीरायत्वावातायस्वाहाअनाधृष्यायत्वावातायस्वाहाप्रतिधृष्यायत्त्वावातायस्वाहा ॥ अवस्यवेत्वावातायस्वाहासिमिदायत्वावातायस्वाहा ॥ ७ ॥ पुनंतुमादेवजनाः पुनंतुमनसाधियः ॥ पुनंतुविश्वाभूतानिजातवेदः पुनीहिमा ॥ ८ ॥ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ ९ ॥

११

शिरोमेश्रीर्यशोमुखंत्विषिः केशाश्चश्मश्रूणि ॥ राजामेप्राणोअमृतꣳसम्राट्चक्षुर्विराट्श्रोत्रम् ॥ १० ॥ जिह्वामेभद्रंवाङ्महोमनोमन्युः स्वराड्भामः मोदाः ॥ प्रमोदाऽअंगुलीरंगानिमित्रंमेसहः ॥ बाहूमेबलमिंद्रियꣳहस्तौमेकर्मवीर्यम् ॥ आत्माक्षत्रमुरोमम ॥ ११ ॥ पृष्ठीर्म्मेराष्ट्रमुदरमꣳसौग्रीवाश्चश्रोणी ॥ ऊरूअरत्नीजानुनीविशोमेऽगानि सर्वतः ॥ १२ ॥ नाभिर्मेचित्तंविज्ञानंपायुर्मेपचितिर्भसत् ॥ आनंदनंदावांडौमेभगः सौभाग्यंपसः ॥ जंघाभ्यांपद्भ्यांधर्मोस्मिविशिराजाप्रतिष्ठितः ॥ १३ ॥ पयःपृथिव्यां० ॥ १४ ॥ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयंतुर्यंत्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिंचाम्यसौ ॥ १५ ॥ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयंतुर्यंत्रेणाग्नेः साम्राज्येनाभिषिंचामि ॥ १६ ॥ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥

अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिंचामि ॥ सरस्वत्यैभैषज्येनवीर्य्यायान्नाद्या
याभिषिंचामींद्रस्येंद्रियेणबलायाश्रियैयशसेभिषिंचामि ॥ १७ ॥ पालाशंभवतितेन
ब्राह्मणोभिषिंचतिब्रह्मवैपालाशोब्रह्मणैवैनमेतदभिषिंचति ॥ १८ ॥ सर्वेषांवाएषवे
दानाꣳरसौयत्सामसर्वेषामेवैनमेतद्वेदानाꣳरसेनाभिषिंचति ॥ १९ ॥ यद्देवकल्पां
जुहोतिप्राणावैकल्पाअमृतमुपवैप्राणाऽअमृतेनैवैनमेतदभिषिंचति ॥२०॥ दीर्घायुत्वाय
बलायवर्चसेसुप्रजास्त्वायचासाअथोजीवशरदः शतम् ॥ २१ ॥ द्यौःशांतिरंतरिक्षꣳ
शांतिः पृथिवीशांतिरापः शांतिरोषधयः शांतिः वनस्पतयः शांतिर्विश्वेदेवाः शांति
र्ब्रह्मशांतिः ॥ सर्वꣳशांतिः शांतिरेवशांतिः सामाशांतिरेधिद्विपदचतुष्पदेभ्यः शुभशां
तिर्भवतु ॥ २२ ॥ श्रीवर्चस्वमायुष्यमारोग्यमाविधात्पवमानंमहीयते ॥ धान्यंधनं
पशुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ २३ ॥ विश्वानिदेवसवितर्दुरितानिपरासुव ॥

यद्भद्रंतन्नऽआसुव ॥ २४ ॥ शक्राद्यादेवताः सर्वैब्रह्मविष्णुमहेश्वराः ॥ सुरास्त्वा मभिषिंचंतुप्रयच्छंतुधनानिच ॥ १ ॥ नारायणोजगन्नाथस्तथासंकर्षणोविभुः ॥ प्रद्युम्नश्चानिरुद्धश्चऋद्धिंयच्छंतुतेसदा ॥ २ ॥ इंद्रोवह्निर्यमश्चैवनैर्ऋतोवरुणस्तथा ॥ वायुः कुबेरोरुद्रश्चदिक्पालाः पांतुतेसदा ॥ ३ ॥ आदित्यश्चंद्रमाभौमोबुधोजीवः सितोर्कजः ॥ ग्रहास्त्वामभिषिंचंतुराहुः केतुस्तथैवच ॥ ४ ॥ आदित्यावसवोरुद्राविश्वेदेवा मरुद्गणाः ॥ लोकपालाः प्रयच्छंतुमंगलानिप्रियंयशः ॥ ५ ॥ नारदाद्याऋषिगणायेचान्येचतपोधनाः ॥ भवंतुयजमानस्यआशीर्वादपरायणाः ॥ ६ ॥ गायत्रीचैवसावित्री शचीलक्ष्मीःसरस्वती ॥ मृडानीमातरः सर्वाभवंतुवरदास्तव ॥ ७ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिः श्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुः शांतिस्तुष्टिः कांतिस्त्रयोदश ॥ ८ ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यः समावृताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ९ ॥ ऋषयो

मानवागावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ १० ॥ अस्त्रा
णिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ ११ ॥
सरितः सागराः शैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुसर्वकार्यार्थसिद्धये
॥ १२ ॥ इत्यभिषेकः ॥ अभिषेकानंतरंपुण्याहवाचनं केचित्पठंतिकेचित्तुवरणश्राद्धानं
तरम् ॥ अतःपूर्वंपठितंचेदत्रापि आब्रह्मन्० शतंजीवशरदोवर्धमा० श्रीवर्चस्वमित्याद्या
शीर्मंत्रान् पठित्वा मंत्राक्षतान् यजमानहस्तेदद्यात् दोषाभावात् ॥ यजमानोपिकृतैतत्
ग्रहयज्ञकर्मणोयन्न्यूनमतिरिक्तं तत्सर्वंभवतांब्राह्मणानांवचनात् श्रीविष्णोर्ग्रहाणांचप्र
सादात् विधिवत्परिपूर्णमस्तु ॥ वृद्धिशतानि भवंतु इतिप्रार्थयेत् ॥ ततउत्थायक्षम्यतां
मित्युक्त्वा अग्निंग्रहांश्चप्रदक्षिणीकृत्यवेदीसमीपेगत्वा श्रीफलंनिवेद्यक्षमाप्यनमस्कृ
त्यसूर्यादीन्विसर्जयेत् ॥ तत्रमंत्राणि ॐसमुद्रंगच्छस्वाहांतरिक्षंगच्छस्वाहादेवंसवि

तारंगच्छस्वाहामित्रावरुणौगच्छस्वाहाऽहोरात्रेगच्छस्वाहाछंदाꣳसिगच्छस्वाहाद्या वापृथिवीगच्छस्वाहायज्ञंगच्छस्वाहासोमंगच्छस्वाहादिव्यंनभोगच्छस्वाहाग्निंवैश्वान रंगच्छस्वाहामनोमेहार्दियच्छदिवंतेधूमोगच्छतुस्वर्ज्योतिः पृथिवींभस्मनापृणस्वाहा ॥ १ ॥ उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतः सुदानवऽइंद्रप्राशूर्भवासचा ॥ २ ॥ यांतुदेवगणाः सर्वेपूजामादाययाज्ञिकीम् ॥ इष्टकामसमृद्ध्यर्थं पुनरागमना यच ॥ ३ ॥ इतिपठित्वा मंत्राक्षतान्मंडलोपरिक्षिपेत् ॥ ततोब्राह्मणान्संभोज्यतदनु ज्ञातः कुटुंबजनैः परिवृतोभोजनंकुर्यात् ॥ इतिग्रहशांतिप्रयोगः समाप्तिमगात् ॥ ॥



इदं पुस्तकं मुम्बय्यां खेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्रालये मुद्रयित्वा प्रकाशितम् । संवत् १९६१, शके १८२६.

# अत्रेयमभ्यर्थना.

अस्माकं मुद्रणालये वेद-वेदान्त-धर्मशास्त्र-प्रयोग-योग-सांख्य-ज्योतिष-पुराणेतिहास-वैद्यक-मंत्र स्तोत्र-कोश-काव्य-चम्पू-नाटकालंकार-संगीत-नीति-कथाग्रंथाः, बहवः स्त्रीणां चोपयुक्ता ग्रंथाः, बृह ज्ज्योतिषार्णवनामा बहुविचित्रचित्रितोऽयमपूर्वग्रन्थः संस्कृतभाषया, हिन्दीमार्वाड्यन्यतरभाषाग्रन्था स्तत्तच्छास्त्राद्यर्थानुवादकाः, चित्राणि, पुस्तकमुद्रणोपयोगिन्यो यावत्यस्सामग्र्यः, स्वस्वलौकिकव्यव हारोपयोगिचित्रचित्रितालिखितपत्रवत्पुस्तकानिच; मुद्रयित्वा प्रकाश्यन्ते सुलभेन मूल्येन विक्रयाय। येषां यत्राभिरुचिस्तत्तत्पुस्तकाद्युपलब्धये एवं नव्यतया स्वस्वपुस्तकानि मुमुद्रयिषुभिः सुलभयोग्य मौल्येन सीसकाक्षरैः स्वच्छोत्तमोत्तमपत्रेषु मुद्रिततत्पुस्तकानां स्वस्वसमयानुसारेणोपलब्धये च पत्रि काद्वारा तैः प्रेरणीयोऽस्मि।

अधिकमस्मदीयसूचीपुस्तकानां भिन्नभिन्नविषयाणां प्रापणेन "श्रीवेङ्कटेश्वरसमाचार" पत्रिकाप्रापणद्वारा च ज्ञेयमिति शम्।

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रालयाध्यक्ष, खेतवाड़ी-मुंबई.

